# करुणापारिजातम्

पुरीसंस्कृतकलाशालाध्यापकेन
साहित्योपाध्यायवेदवेदान्तमीमांसाचार्येण
मञ्जूषाराजपुरोहितेन
श्रीसुदर्शनपाठिशर्मणा
प्रणीतम् ।

---

उत्कलप्रान्तस्य भूतपूर्वशिक्षासचिवानां
पण्डित श्रीलिङ्गराजमिश्र एम् ए महोदयानाम्
आनुकूल्येन
ब्रह्मपुरस्थशिरोमणिमुद्रालये
श्रीअनन्तत्रिपाठिशर्मणा
मुद्रयित्वा प्रकाशितम् ।

---

प्रथमं संस्करणम्

१९५२

मूल्यं सपादं रूप्यकम्

# पात्रपरिचयः

| | |
|---|---|
| पारिजातः | नायकः |
| गोरक्षनाथः | राजा |
| प्रमोदः | राजपुत्रः |
| वीरभद्रः | सेनापतिः |
| प्रधानामात्यः | — |
| विलासः<br>क्षीरोदचन्द्रः | } कलाशालायाः प्रान्तोपाधिकौ युवकौ |
| अवतंसकः<br>मत्तमयूरः | } वन्या अधिकारिणौ |
| लोहितः | शवरसैन्याध्यक्षः |

विष्णुरथः वराटकः, गोलोकः, कदलीविक्रेता, शवरः इत्यादयः

| | |
|---|---|
| करुणा | नायिका |
| मुदिता | करुणाया भगिनी |
| आभीरी | मत्तमयूरस्य कन्या |
| पिच्छिला | शवर बालिका |
| दामिनी | कलाशालायाश्छात्री |
| चञ्चला | ,, ,, |
| नर्तकी— | |

# उत्सर्गपत्रम्

अत्र भवतां प्राच्यपाश्चात्योभयविद्याप्रवीणानामुत्कलस्य भूतपूर्वशिक्षामन्त्रिणां लोकसभा सदस्यानां पण्डित श्रीलिङ्गराज-मिश्र एम् ए महोदयानाम् अविच्छिन्नदेशसेवापरिपूतयोः करकमलयोः समर्पयामीदं करुणापारिजातं नाटकम् ।

ता १४-६-५२

ग्रन्थकारः



# निवेदनम्

श्रीपुरुषोत्तमक्षेत्रस्थराजकीयसंस्कृतकलाशालायाः छात्रैः सामाजिकनाटकरचनार्थमनुरुद्धोऽहं करुणापारिजातं व्यरचयम्। भारते मध्यकालिकराजकुलस्यशासनावसरे रचितमिदं तत्कालोचितेन देशीय सामन्तराजेषु सुलभेन चरित्रेण संस्कारप्रवणत्वेन च संविधानवत् कृतम्

अत्र च सरसापि प्राकृता भाषा नेदानीं सामाजिकानां बोधगम्येति न प्रयुक्ता। गीतेषु पुनरक्षरनियमवत्स्वपि मात्रा-नियमः सुरक्षित इति सर्वाण्येव गीतानि सर्वदेशीयानां गान-योग्यानि भवन्ति।

एतद्धि मन्मित्रेण उक्तकलाशालायाः सांख्ययोगाध्यापकेन श्रीकाशीनाथमिश्र शर्मणा पर्यवेक्षितम्। आयुर्वेदाध्यापकेनायुष्मता श्रीमदमरनाथ मिश्रेण सङ्गीताभिनयशिक्षकाभ्यां श्रीसीमाचल-सावत गौराङ्गचरण दासाभ्याञ्च प्रयुक्तं श्रद्धास्पदैरस्मत्कला-शलान्तेवासिभिः खी १९४९ शाके निखिलोत्कलसंस्कृतच्छात्र-सम्मेलनावसरे वारद्वयं कटकनगरे वारमेकञ्च श्रीपुरुषोत्तमे अभिनीतं श्लाघ्यैः सहृदयैरभिनन्दितञ्चासीत्।

मत्कृतपादुकाविजयस्याभिनयदर्शनान्तरं करुणापारि-जातमुद्रणव्ययस्यांशतः पूरणं प्रतिश्रुतवद्भिः उत्कलस्य तदानीन्तनशिक्षामन्त्रिभिः श्रीलिङ्गराजमिश्रशर्मभिः समुत्सा-

हितोऽहमस्य मुद्रापणे यत्नवानभूवम् । अतस्तान् मान्यवरान-जस्रं प्रणमामि ।

एवञ्च पुरी संस्कृतकलाशालाध्यक्षेण उत्कलेषु प्रख्यात-नाटकरचयिता श्रीरामचन्द्र महापात्र एम्.ए.एल्. टि. काव्यतीर्थ-महोदयेन मत्सुहृद्भ्यामुक्तकलाशालायाः सांख्यव्याकरणाध्या-पकाभ्यां श्रीकाशीनाथमिश्र— श्रीपद्मनाभमिश्रशर्मभ्याञ्च आमूलचूलं समीक्षितमिदं नाटकं परिष्कृतमिति तेषु परमोदारेषु स्वान्तस्य गम्भीरमभिनन्दनं निवेदयामि ।

अन्यच्च माननीयेन शिरोमणिमुद्रणशालाधिकारिणा संस्कृताङ्गलोत्कलतैलिङ्गादिविविधभाषानिपुणेन नानाविरुद-मालाशालिना श्रीमदनन्तत्रिपाठिशर्मणा अस्य नाटकस्य प्रकाशनं मुद्रणदोषशोधनञ्च कुर्वतात्यन्तमुपकृतः, चिरायास्मिन् महाशये कृतज्ञतां स्वीकरोमि ।

ततश्च 'परगुणपरमाणून्पर्वतीकृत्ये'त्यादिन्यायेनअसंशयं क्षमाशीलानां काव्यरसिकानां सहृदयानां पुरत एतदुपस्थाप्य नम्रोऽवतिष्ठ इति

श्रीसुदर्शनपांठी

१४-६-५१

# अभिमतम्

न केवलं समाजे, राजनीतौ, साहित्ये अपितु कलायां, रुचौ, चिन्ताधारायामपि पाश्चात्यप्रभाव आधुनिक भावश्च परिवर्त्तनमानीतवन्तौ। सर्वत्र हि किञ्चिन्नूतनत्वमनुभवितुं सर्वे स्पृहयन्ति। कालप्रभावमनादृत्य चेष्टमानः पुरुषः न केवलं समुन्नतिं नलभते अपितु सर्वत्रानादरं लभते। प्राचीनता नूतन-वेशभूषिता नूतनता च परिमार्जिता यथा हृदयग्राहिणी स्यात् तथा सर्वैश्चेष्टनीयम्। अद्यत्वे साहित्येऽपि भाषायां, भावे, प्रकाशभङ्गयाञ्च नूतनताया आत्मप्रकाशः सर्वत्र सर्वैरनुभूयते, आधुनिकाः काव्यनाटककर्त्तारः कलाविदः सर्वेऽपि स्व— स्व— लेखेषु नवीनत्वमेव आदरेण स्थापयन्ति, पाठकाश्च तदतीवाद्रि-यन्ते।

साहित्यस्यानेकेषु विभागेष्विव नाटकेष्वपि इदानीं बहु परिवर्त्तनं जातम्। कालिदासभवभूतिप्रभृतिभीरचितानां नाटकानां भावभाषाभिनयकल्पनादिभिः आधुनिकनाटकानां तानेव तुलयता विवेचकेन एतद् परिवर्त्तनं सुस्पष्टं द्रष्टव्यम्, आधुनिकरुचिरेवैतस्य परिवर्त्तनस्य मूलम्।

पण्डित श्रीसुदर्शनपाठिशर्मा तु आधुनिको नाट्यकारः अतस्तस्य नाटकानां विषयपरिकल्पना, पात्राणां वेशविन्यासः भावः गीतं नृत्यं च समयोपयोगीनीति स्वाभाविकमेतत्। तेन पौराणिकं सामाजिकं च नाटकमाधुनिकानां रुचिमनुसृत्य

विरचितमिति तन्नाटकं रङ्गमञ्चेऽभिनयावसरे सामाजिकाना-
मादरमलभत ।

करुणापारिजातं हि सामाजिकं नाटकम् । अस्मिन् समा-
जस्य चित्रं विशेषतः पूर्वतनसामन्तराज्यवासिनां सामाजिकं
राजनीतिकं च जीवनमुपवर्णितम् संस्कारस्य समुन्नतेश्च
सम्यक् सूचना प्रदत्ता ।

अस्मिन् नाटके नायिका करुणा, पारिजातश्च नायकः ।
मुख्यतः गान्धिमहात्मना प्रदर्शिते पथि प्रवर्त्तमानौ करुणापारि-
जातौ शबरान् कर्त्तव्यबोधपरान् विधाय स्वातन्त्र्यं प्रापयामासतुः
पुरुषपुरराजवंशस्य परम्परागतं शवरेष्वाधिकारं च विलो-
पयाञ्चक्रतुः, राजपुत्रस्य गान्धिवादे दृढमनुरक्तस्य प्रमोदस्य
प्ररोचनं राज्ञः नकेवलं शवरेभ्यः अपितु सर्वेभ्यो देशवासिभ्यः
स्वातन्त्र्यप्रदाने अनुकरणीयतामर्हति ।

भीषणरूपं दधती भवतां तपतितरामशनाया
तदधिकभीमा वाससिकामा जातु नहि क्षमणीयाः । १ ।
एवमसुन्दर परिणतिभीकरवैरवतां विनिपाते ।
लाङ्गलचरखे मुख्ये विशिखे योजयताचिरमेते । २ ।

वने स्वयं सूत्रं कर्त्तयन्त्या अन्याश्च शवर बालिकाः
शिक्षयन्त्या करुणाया मुखान्निःसृतमिदं गीतम् अतीवदेश-
कालोपयोगि हृदयमानन्दयाति ।

प्राचीनसंस्कृतग्रन्थेष्वलब्धै रुचिकरैर्वृत्तैः निबद्धं संस्कृत-गीतं नाटकमेतदतिरामणीयकं प्रापयन्ति ।

पण्डित पाठिशर्मा स्वाधीनताया महामन्त्रमुच्चारयन् स्वदेशवासिन उद्बोधयति । अद्यत्वे स्वाधीनेऽस्मिन् भारतवर्षे एतादृशानां नाटकानामुपादेयता सर्वत्रानुभूयते । एवञ्च रच-नापाटवेन संस्कृतभाषाऽपि अनायासेन बोधगम्या भवतीति नाटककारेणात्र सुस्पष्टं प्रतिपादितम्

अतस्तन्नाटकपठनाभिनय—दर्शनोत्फुल्लमानसोऽहंनाटक-कारस्यास्य अन्याअपि कृतयः लोकलोचनगोचरतामायान्त्विति भगवन्तं श्रीनीलाचलनाथं संप्रार्थ्य पण्डितं पाठिशर्माणमभिनन्द-यामि । इति ।

श्रीरामचन्द्र महापात्रः

दिनम् १४-६-१९५२






माता माता भारतमाता

पावन पौरुष पोषितसारा

निर्मल ललिता कविताधारा

बहुविधविद्या चिरमनवद्या

विभीतिसमरे याताऽयाता ।१।

संस्थितिसौष्ठवसंस्कृतिरम्या

संचितविभवैर्नितरां काम्या

विरहितनिन्दा जगदभिनन्दा

पुनाति जनतां तीर्थोर्पिता ।२।

जागृत जागृत बोधत गाढं

यास्यति कुदशा भवतां वाढम्

न भवत भीता अयतननीता

विभाति जननी भाषातीता ।३।



# करुणापारिजातम्

प्रथमाङ्के प्रथमदृश्यम्

( वनम् – अन्तरा महाकाल्या मन्दिरं दृश्यते कुटीरमभितो वंशदण्डैरचिता कारा । करुणा मन्दिरमुखी उपविष्टा )

करुणा—देवि! त्वामेव शरणं गतास्मि—जानीषे जननि ! वस्तुतः वधूरस्मि भवत्याः—स त्वत्सुतः— तव प्रसादात् सुखं चिरं तिष्ठतु—एषाहं—मम प्रियस्य कृते बलिरस्मि वरदे तवैवास्य चरणसरसिजस्य ( साष्टाङ्गं प्रणमति ) ( कश्चित् शबरः प्रविश्य, करुणां निर्वर्ण्य, यथेष्टं चेष्टमानः स्थितः, प्रविशति द्वितीयः )

प्रथम शबरः :—भल्लाक्ष रे! ( करुणां निर्दिश्य ) बाढं खेलनकम् !

द्वितीय शबरः :—धिक्—किमेवं मूढ! भट्टारको दृढं निषिध्यति नकोऽपि अस्याः प्रसङ्गमपि उत्थापयेत् ( करुणा इतः पश्यति ) ओः—कर्कशं पश्यति—एहि दूरं यावः । ( सभयं प्रस्थितौ )

करुणाः—( तौ विलोक्य ) अहो! भयं हि जन्तुमात्रसाधारणम् अन्यजनभयङ्करौ दस्यू अप्येतौ स्वस्वामिनो दृढं बिभीतः—सोऽप्येषां प्रभुः कस्मादपि भीत्वा ममाप्येवं पीडां करोति—निष्ठुरोऽयं पातकी—

( प्रविशति अवतंसकः )

अवतंसकः—अये! कोयं निष्ठुरः, को वा पातकी ?

करुणा—ननु त्वमेव निष्ठुरतमः—

अवतंसकः—हाः हाः कथमस्मि निष्ठुरः—किमहं खाद्य-मदत्त्वा, जनान् नाशयामि ? अथवा पशुमारं मारयामि ?

करुणा—उभयत्रापि समम्, अग्रेसरो भवान्।

अवतंसकः—किमेवं वातुलबालिके ! किमहं शिशुरस्मि ? धनलाभार्थं किम्वा न कुर्वन्ति मनुष्याः—एवमहमपि किञ्चित् कुर्वन् धनम् अर्जयामि—न च त्वां तव असदृशे प्रवर्त्तयामि किञ्चासौ देवो गोरक्षः तवैव समानो रूपेण गुणादिना च--किमत्रभवती तं न वरयेत—तस्याभीष्टं सिध्यति—ममाभीष्टं सिध्यति—तवापि......

करुणा—धिक् आसुर ! किमपि प्रलपितुमारभसे—

अवतंसकः—( क्रुद्धः ) किमेवं फणिनि! न जानीषे फणिधरम् अवतंसकम्—को वात्र प्रलापः—त्वं देवं गोरक्षनाथं न वरयसि ?

करुणा धिक् ! पुनः प्रलापः मूर्ख ! वरणं कन्यकासु सम्भवति।

अवतंसकः—न किं त्वं कन्यका ?

करुणा—मूढ ! कथमेतावदपि न जानीषे ?

अवतंसकः—एवं चेत् मूढएवाहम् [ साटोपम् ] परं मिथ्या वदसि त्वम् ।

करुणा—अहो! पतिगृहादपहरन्नपि कथं मामन्यथा सम्भावयसि ? न वा परिचितस्ते स भवान् सर्वजनोपकारी—वर्त्तमानमपि कुचक्रिराजपुरुषैर्वन्दिशालायामवरुद्धः ?

अवतंसकः—कोऽसौ ?

करुणा—मृगयायां स्वाच्छन्द्यं सम्पादयन् युष्माकं महोपकारी—इयद्भिरेव दिनैर्विस्मृतो भवता ?

अवतंसकः—अरे कं वा त्वमुद्दिशसि ? कथमहं तमेव महोपकारिणं मान्यतमं जनप्रियं श्रीपारिजातं जीवितो विस्मर्त्तुं प्रभवामि ?

करुणा—परन्तु—तस्यैव पत्नीं धनलोभेन अवरुद्ध्य, परपुरुष—परिचरणार्थं निर्बन्धयसि ।

अवतंसकः—[ साश्चर्य्यः ] किमिदं विचित्रं ब्रवीषि ?

करुणा—नाहं विचित्रं ब्रवीमि—तव धनमूढस्य एवं मतिर्भवति ।

अवतंसकः—[ मूढइव ] किं किं—सत्यं कुलवधूस्त्वम् ?

करुणा—अहो ! तव एवमज्ञानस्य कारणं—निष्ठुरत्वं—लोभो वा स्यात् ।

अवतंसकः—[ अञ्जलिं बद्ध्वा ] शिशुरसि देवि ! परं मां

दीनतमम् अनुकम्पयितुमर्हसि—वन्यैरेव परिचिता [शालार्गलदण्डान् क्रमशोऽपसारयन्] वनवासिनो वयम्—नास्मान् संमानयन्ति वा गणयन्ति वा नगरवासिनः—नास्माकं हृदयं तत्र परीक्ष्यते—नास्माकं मनुष्यतापि प्रमाणीक्रियते— वयं हि पितृपरम्परया भूस्वामिनां दासभूताः—तेषामेव आदेशात् यदिवा अज्ञानेन सदृशं जनं सदृशे एव अनुरञ्जयितुं यतामहे—तथापि वनेचरत्वादेव [तस्या अभिमुखीभूय] ग्रामीणत्वादेव—अस्मान् निष्ठुरा इति—मूर्खा इति ससमुद्घोषमुद्घाटयन्ति भवन्तः—परन्तु......

करुणा—परन्तु—अवतंस ! ये पुनर्भूस्वामिनः सरलं धर्मिकमपि जनम् एवं विधेष्वनर्थेषु निर्विशङ्कं प्रवर्त्तयन्ति स्वदुरभिसन्धीन् सर्वत्र अविशेषेण चालयन्तः विश्वस्तानामनुगतानामपि सर्वस्वहरणैर्निजं छन्दं पूरयन्ति—तेपुनर्धर्माधिकारिणः—न ते केनापि परिभूयन्ते—प्रत्युत समर्थ्यन्ते— बहुमन्यन्ते— आदर्शीक्रियन्ते —धन्योऽयं कालः—धन्योऽयं लोकः— राजपुरुषाअपि तेषां बान्धवाः शान्तिरक्षका अपि तेषामनुगताः—मध्यस्था अपि तत्पक्षपातिनो भवन्ति—परन्तु भद्र ! नहि दक्षिणामेव

आक्रम्य सर्वदा सूर्य्य उदेति—अयमचिरात् उत्तरत उदेता—अचिरादस्य भाग्यपरिभूतिर्नियतं भविता—सत्यं परिष्क्रियेत—अवश्यमेव स्वभागधेयानां स्वयं नियामिका भवन्ति प्रजाः— तदैषां सर्वस्वत्यागेनापि निरापत्ता न सम्भाव्यते—किं पुनः प्रभुता—

अवतंसकः—एवं जननि ! क्षिप्रं समागच्छतु तथाविधः कालः-क्षिप्रतरं च दोषहीनं प्रत्यावर्त्ततां स्वामी श्री पारिजातः। अपि देवि ! यावदेवं स्यात्— तावद्भवती अत्रैव स्थातु-मर्हति [ नतजानु भूत्वा ] अनुकम्पय मात, गृहाण नति-कोटीः, न पुनर्वारय—नियतमत्र वनवासिनः, सनाथय—अत्रत्याः सर्व एव तव दासाः—

करुणा—एवं भवतु भद्र ! न त्वादृशा महान्तः प्रतिवक्तव्या भवन्ति। यावदवस्थानां परिष्कारः तावत् युष्मास्वेव वसा-मि यथेष्टमादिश ।

अवतंसकः—नैवं जननि ! तवैव दासा वयम् त्वामेव अजस्रं प्रणमामः—त्वदादेशं मानयामः ( तूर्य्यं ध्वनयति )

( प्रविशतः शबरौ )

अरे ! सर्वानपि एवं कथयत—इतःप्रभृति इयमेव भवतां स्वामिनी—इयमेव भगवती मूर्त्तिमती—अस्या आदेशं सावधानाः पालयन्तु सर्वे भवन्तः—प्रमादेनापि नाति-

क्रमणीयः—इयं जननी—उच्चैर्वदत – "जीयाज्जननी"

शबरौ— जीयाज्जननी,, ( पटक्षेपः )

---

प्रथमाङ्के द्वितीय दृश्यम्

( उद्यानम्, प्रविशति वराटकः )

वराटकः— [ यथेष्टं हसित्वा ] परमा ममाभीष्टसिद्धिः—अद्य किञ्चित् चिरादेव लब्धवानस्मि सुरसिकासरसनृत्यदर्शनमहोत्सवं— पानं— गानं—भोजनं नर्त्तनं—धनं मानं—समं प्राप्तवानस्मि— स्वामिनम् आनन्दयितुं— सर्वं--यथायथं घटयामि ( आसनादिकं वस्तुजातमानीय यथायथं स्थापयति) इदानीमागच्छतु महाराजः— क्षिप्रमागच्छतु—क्षिप्रतरमागच्छतु—रङ्गिणिका उत्तमा नर्त्तकी—सा हि एवं नृत्यति [ अभिनयति ] एवं हसति [ अभिनयति ] एवम् ईक्षते [ अभिनयति ] [ कंचित्कालं ध्यानमभिनीय ) शोभनं स्यात्— ( प्रविशति गोरक्षनाथो वीरभद्रश्च ) ( वराटकः नमस्कृत्य, किञ्चिदन्तरेण स्थितः, सर्वे उपविशन्ति )

गोरक्षनाथः—वराट !

वराटकः—महाराज ! ( पानपात्रम् उपनयति )

गोरक्षनाथः— [ किञ्चित् पीत्वा ] सखे ! अद्य प्रथमं किञ्चित्

पीत्वा एव ब्रूमः ।

वीरभद्रः— [ किंचिदास्वाद्य ] यथाज्ञापयति महाराजः—

[ उभौ यथेष्टं पिवतः ]

गोरक्षनाथः— वराट ! रङ्गिणिका—

वराटकः— महाराज़— [ गच्छन् अभिनयन् ] शोभनं भवेत्

[ गतः ]

गोरक्षनाथः— बन्धो ! भवत आशीर्वादेन सिद्धप्राया अस्मन्-मनोरथाः ।

वीरभद्रः— महाराज ! महाराजस्यैव पौरुषैः शुभादृष्टैश्च संभ्रियन्ते फलानि वयमत्र महाराजानुगृहीताश्चिरं नन्दामः

[ नेपथ्ये संङ्गीतारम्भः ]

वीरभद्रः—आयाता रङ्गिणी

गोरक्षनाथः— [ सस्मितम् ] बाढम्-- आगच्छतु ।

[ नृत्यन्ती नर्त्तकी आगत्य, यथायथं नर्त्तनान्ते-प्रणम्य, निष्क्रान्ता ]

गोरक्षनाथः— गता—गता—रङ्गमृगी

वीरभद्रः - कथमेवं स्यात् ?

गोरक्षनाथः—हस्तग्राहम् आकृष्य, आनयत धूर्त्ताम् ।

[ वीरभद्र उत्थाय, गतः । वराटकः पात्रसज्जमादौ रतः । वीरभद्रस्तामाकर्षन्नागच्छति ]

रङ्गिणिका—( कातरा इव ) परित्रायतां परित्रायतां महाराजः-

गोरक्षनाथः—एषोऽहं प्रिये ! स्वस्यैव वामभागे रक्षितास्मि भवत्याः ( उत्थाय तस्या दक्षिणं याति )

रङ्गिणिका—( कातरत्वमभिनयन्ती ) मोचयतु मां महाराजः।

गोरक्षनाथः—कस्मात् रङ्गिणि !

रङ्गिणिका—( तथा ) अहं पुन र्महाराजस्य कृते वेशवल्लीम् आनेतुं यामि।

वीरभद्रः—द्वितीया त्वं कस्य ?

रङ्गिणिका—तवैव मधुकरिकानागरस्य,

वीरभद्रः—धिक् ,धिक् का सा वराकी

रङ्गिणिका—( गोरक्षम् ) शीघ्रमुपासनार्थमनुगृह्णातु गर्भदासीं महाराजः।

गोरक्षनाथः—एवं भवतु प्रेमशीले ( तस्याःकरपल्लवमादाय परचुम्ब्य ) गच्छ, क्षिप्रमागच्छ।

रङ्गिणिका—यथाज्ञापयति महाराजः ( नमस्कृत्य गता )

गोरक्षनाथः—त्वरितं प्रत्यावर्त्तेत वाराङ्गना ?

वीरभद्रः—ऐवं भवतु ( किंचिदुच्चैः ) अये वाराङ्गने वराङ्गने वरे—अङ्गने—शीघ्रं— शीघ्रं—शीघ्र—मागच्छ स सहचरी—गङ्गेव—यमुनेव—सरस्वतीव ( गोरक्षम् ) देव ! क्षणमत्र उपविशतु देवः ( आसनं दर्शयति, उभौ उपविशतः )

गोरक्षनाथः—वराट ! द्वारे तिष्ठ

वराटकः—महाराज (नमस्कृत्य गतः)

वीरभद्रः—स्वीयं भागधेयमधिकृत्य, किंचित्प्रष्टुमिच्छति भृत्यः।

गोरक्षनाथः—किमेवं प्रस्तावनया ? यथेच्छं पृच्छ, किमत्र-
भवतां भागधेयशब्दार्थः ?

वीरभद्रः—महाराजस्य अभीष्टसिद्धय एव ।

गोरक्षनाथः—किम्वा भवद्धृदयम् ?

वीरभद्रः—करुणावानपि महाराजः कथमकरुणो वर्त्तते ?

गोरक्षनाथः—सखे ! तद्धि दुर्दैवहतकम्—

सीमन्तिनीकुलशिखां सुषमेन्द्रजालं
स्मेराननां तरलनीलसरोजनेत्राम् ।
यन्नात् प्रियामुपहृतां हि निजाधिकारं
गूढं प्रतीपमनसा सम्प्रयोजयत्ताम् ।

वीरभद्रः—परन्त्वत्र भवतं सकः प्रतीपमपि मनः प्रत्यावर्त्तयितुं
समर्थ एव ।

गोरक्षनाथः— एवमपि न विश्वसिमि दैवहतकम्, प्रभुभ-
क्तोऽपि कर्मठोऽपि भवतं सकः दुष्कार्य्यात् पश्चात्पदः।

वीरभद्रः—परमियं कुमारीति तस्य दृढं विश्वासमजनयम्,
शतशोऽप्यनया निवेदितवधूभावः स न विश्वसिति ।

गोरक्षनाथः—एवं भवतु परं पारिजातहतकं कियन्तं वा कालम्-एवं मिथ्याभियोगेनअवरोधयामः ? यदि अन्यथा सम्भवेत् !!

वीरभद्रः—यथाज्ञापयति महाराजः/ महाराज ! दृढं काकपक्षशवराणां विद्रोहस्य शमनाय, तमेव विश्वास्य प्रेषयामः ।

गोरक्षनाथः—कथमेवं स्यात् ?

वीरभद्रः—देव ! वाढम् एवम् एव स्यात्। प्रधानं मन्त्रिणं पणेन पारिजातस्य मोचनार्थं समादिशन्तु देवपादाः—स यथा कारागृहादेव पार्वत्य प्रदेशं गच्छेत् ।

गोरक्षनाथः ततः ?

वीरभद्रः—किंवा ततः ? स तत्रैव चिरं तिष्ठेत् जीवितो वा मृतो वा। उभयथापि महाराजस्य मनोरथः सिध्येत् ।

गोरक्षनाथः—यद्यचिरात्प्रत्यावर्त्तेत ?

वीरभद्रः—नैवं देव ! अनन्तर करणीयार्थं समर्थ एष दासः !

गोरक्षनाथः—एवं भवतु वयस्य ! एहि प्रधानम् आकारयावः ( उत्तिष्ठति )

वीरभद्रः—( उत्थाय ) यथादिशति देवः ( निष्क्रान्तौ )

[ कक्षा खट्वायामुपविष्टः पारिजातः विशिष्टबन्दीना मुचिता सज्जा ]

पारिजातः—सत्याशिषः परिफलन्तु महामतीनां
सत्यं विहिंसमखिला अनुमोदयन्ताम् ।
सत्ये पथि व्यसनिनस्त्यजत प्रमादं
सत्यं चिरं स्फुरतु शान्तमपापविद्धम् ॥

वर्बरोचितानि खलु केषांचित् भूम्यधिकारिणां चेष्टितानि । निरीहान् मृगानिव वन्यान् यथेष्टमुपभुज्यापि पीडयन्ति । अस्मद्विधानपि मिथ्याभियोगेन कारागारमवरुन्धन्ति [ उत्थाय ] अहो ! भारतवर्षम्, एवमेव तव ललाटलेखनम् ! एवमेव अपारमनुभव स्वसन्ततीनां नीचत्वम्- येषामस्माकं भारतवासिनाम् अद्यत्वेऽपि गान्धिमहात्मना प्रदर्शितेष्वपि सत्यपथेषु न-स्वावलम्बनशीलतायामुद्यमः कदा वा भारतीयाः युष्माकं परिष्कारः स्यात् अथवा, किम्वा अथवया ? अवश्यम् अवश्यम् —

[ प्रविशति सुरथः ]

सुरथः— किमवश्यं श्रीमन् !

पारिजातः— [ नमस्कृत्य, प्रतिनमस्कुर्वन्तम् ] अवश्यं पुनः—
श्वः पुरस्तात् सूर्य्यउदेता—नेयं रात्रिरेव चिरं स्थास्यति।

सुरथः— उपविशतु आयुष्मान् [ स्वयमुपविशति ]

पारिजातः— ( उपविश्य ) यथेष्टमादेष्टुमर्हन्ति।

सुरथः— प्रथमतः अस्मद्विधा निःसन्देहा एव तव निर्दोषतायाम्-
परन्तु— अधिकरणस्योपयोगीनि त्वद्विरुद्धानि प्रमाणा-
नि आपातसिद्धानि प्रतीयन्ते।

पारिजातः— किम्वा कुर्य्यां मन्दभाग्यः ?

सुरथः— महाराजः त्वत्त एव तव निर्दोषत्वं प्रमाणयितु-
मिच्छति।

पारिजातः— को वात्र अभिप्रायः ?

सुरथः— एवमादिशति महाराजः— यदि पारिजातः काकपक्ष-
शबराणां विद्रोहेषु न नेता, नवा मन्त्रयिता तदा तेषां
दमनाय प्रेष्यमाणानां सैनिकानां परिचालकत्वेन गत्वा
स्वस्य राजनि अनुरागं प्रमाणीकरोतु।

पारिजातः— ( सोपहासम् ) कथं विद्रोहिणां नेतारं राजपुरु-
षाणां परिचालनाय समादिशति राजेन्द्रः।

सुरथः— नह्येवं श्रीमन् ! सर्वो हि विजानाति भवतः शुद्धत्वम्
ततश्च देवस्त्वामेव प्रमाणीकरोति।

पारिजातः— यद्यहं सत्यं विद्रोही भवेयम् ? यद्यपि सैनिकान् यथेष्टं चालयेयम् ?

सुरथः— तत्रापि पारिजात— समर्थं पुरुषपुरस्य राजकुलम् । स्वयमेव स्वमतमुपस्थापय ।

पारिजातः— किम्वात्र प्रयोजनम् ?

सुरथः— प्रत्येति राजा, प्रत्येति लोकः ।

पारिजातः— कालः प्रत्याययेत्

सुरथः— न पुनरपेक्षायाःकारणं किंचित्— अपरञ्च पारिजात ! अवसरे स्वपौरुषं कुतो न प्रकाशयिष्यसि ? भवतो मुक्तिश्रवणेन च लोको निराकुलो भवेत् ।

पारिजातः— ( क्षणं विचिन्त्य ) एवं भवतु आर्य्य ! भवदादेशेन नियमयामि राजकीयान् शान्तिरक्षकान्— परन्तु-पराजितानां शस्त्रेन गृहीतानां वा वन्यानां प्रार्थितानि पूरये-युर्भवन्तः ।

सुरथः-- एवं भवतु— इदानीमेव अभियातु भवान् एवमेष महाराजानामादेशः ।

पारिजातः— ( क्षणं विचिन्त्य स्वगतम् ) करुणे ! करुणे ! ( दीर्घं निःश्वस्य प्रकाशम् ) एवं भवतु आर्य्य ! एष-राज्ञ आदेशमपेक्ष्य, तिष्ठामि

सुरथः— कुतः पुन रपेक्षणम्— आगच्छ श्रीमन्— सैनिकान्

आहूय, उपदिशावः ।

पारिजातः— यथादिशन्ति ( उभयोर्निष्क्रमणम् )



प्रथमाङ्के चतुर्थं दृश्यम्

( सुसज्जितायां कक्षायां रेडिओयन्त्रं संयोज्य समाकर्णयन् प्रमोदः )

प्रमोदः— पण्डितजवाहरलालानां भाषणं— 'स्वराज्यार्थं भयं हिंसां च त्यजत' बाढम्, बाढम्, पुनः— 'स्वराज्यं चालयितुं दृढं समर्था भारतीयाः' सत्यं, सत्यं, चिरं-जीयात् जवाहरः ।

( प्रविशति दामिनी )

दामिनी— भद्रं ते अभीष्ट – ( नमस्करोति )

प्रमोदः-- ( प्रतिनमस्कृत्य ) भद्रतममिदानीं मे तवागमनेन-उपविश ।

दमिनी— ( उपविश्य ) परं वचनेन मज्जयितुं समर्था भवद्विधाः पुरुषाः ।

प्रमोदः— यद्यपि पुरुषानेव मज्जयन्ति भवत्यः— को वा दोषोऽत्र

मद्विधानां सम्भवेत् ?

दामिनी— ( स्मित्वा ) उक्तं— वाक्येषु धुरीणा इति— परन्तु— प्रियतम, अद्यैव मां दृढां वाचं प्रतिश्रावय— नेतःपरम-स्यावयोः समानुरक्तयोरपेक्षणं शोभते।

प्रमोदः— परम्— अद्यैव— कथम् ?

दामिनी— किं पुनः कथमिति ? विद्वान् भवान्— सभ्यतालोकेन सम्यगालोकितो भवान्— न पुनरप्राप्तवयाः— कथं स्वपत्नीनिर्णये न प्रभुर्भवेत् ?

प्रमोदः— नेदमित्थं प्रेयसि !— समानुरक्तयोरपि परिणयो लोकमनुसृत्य, कालमपेक्षते।

दामिनी— ज्ञातम्— दृढं निःस्नेहोऽसि दीनायाम्।

प्रमोदः— नह्येवं दामिनि ! अत्यन्तं प्रियासि, नच रूपतो गुणतः पाठतो वा तव दैन्यं दृश्यते— अचिरात् उत्तरयिष्यामि

दामिनी— परन्तु प्रिय ! नाहमधिकं कालं क्षेप्तुं शक्नोमि— स तु क्षीरोदचन्द्रः सोत्कण्ठमपेक्षते मम सम्मतिम्। नपुनः क्षीरोदो धनादिना भवद्भ्यो न्यूनः— परमत्यन्तं प्रियोऽसीति एतावन्तं कालमपेक्षितवती— प्रिय ! किं त्वरितं सम्मत्या अनुरक्तां न कृतार्थयसि ?

प्रमोदः— बाढं त्वरितमुत्तरयामि— इदं ह्यत्र साक्षि ( तस्याः करपल्लवमुन्नीय चुम्बति )

दामिनी— ( हस्तं विच्छिद्य सस्मितम् ) विश्वस्तास्मि प्रभ !— यामि—

प्रमोदः— याहि दामिनि ! ( परस्परसस्मितदर्शनानन्तरं सा गता ) अहो ! किम्वा कर्त्तुमीशे मन्दभाग्यः। कासांञ्चित् नागरिकाणां छात्राणां परिणयपीडया—इयं तावत् क्षीरोदं दृढमवलम्ब्य एव मामाक्रष्टुमुद्यता— अपरा पुनः अपरेण अभिसन्धिना ( दृष्ट्वा ) इयमागता ( अग्रेसरीभूय ) स्वागतं श्रीमत्याः ? नमस्कारः ( नमस्करोति )

( प्रविशति चञ्चला )

चञ्चला— [ नमस्कृत्य ]कथं जीवितनाथम् उपसर्पन्त्या आगमनं शुभं न स्यात् ? प्रियतम ! नियतं जानीषे— अन्येऽपि त्वत्सदृशाः प्रार्थयितारो मम वहवो विद्यन्ते परन्तु भवत् प्रेम्णा तथा परिषिक्तं मे हृदयं तान् सर्वानवमत्य त्वामेव— आश्रयितुमिच्छति— अपिच— उक्तं वहुशः इदं भेषजविद्याध्ययनं त्वत्परिचर्य्यायामेव विनियोक्ष्ये।

प्रमोदः— एवं देवि ! अहमप्यन्वहं पीडितः स्वतःस्निग्धान्तीं भिषग्वरां लब्ध्वा, आजीवनं सुखी भवेयम्।

चञ्चला— परन्त्विदं त्वदायत्तमेव।

प्रमोदः— दैवायत्तमिति कथय— विधाता हि प्रणयिनोरपि

परिणयम् अनुमन्तुं नेच्छति

चञ्चला— किमावयोरप्येवं सम्भवः ?

प्रमोदः— मा एवं भवतु ! ( यन्त्रमाकर्ण्य ) शृणु तावत् महात्मनामादेशाक्षराणि— "अस्पृश्यता हि महानन्तरायः स्वराज्य लाभस्य" यथार्थं, यथार्थं— पुनः— "परस्परं प्रेम परस्परं संनिकर्षयति" बाढं, बाढं— नैवं चञ्चले ?

चञ्चला— नैवं चेत् प्रमोद ! कुतत्यस्त्वं— का वा अहं कथमावयोः अत्र परिचयः— कथं वा परिचयस्य परमा काष्ठा विवाहप्रसङ्गः— परं प्रियतम ! नपुनश्चञ्चला कालातिपातं सहते— अनेकेऽत्र पाणिप्रार्थिनः अपेक्षन्ते शीघ्रमेव भवता स्वमतं निश्चेतव्यम् ।

प्रमोदः— अवश्यमवश्यम्

चञ्चला— यामि प्रिय !

प्रमोदः— यातु प्रियतमा पुनःशीघ्रमागमनाय ।

( तद्धस्तं पीडयति सा सस्पृहमालोक्य, गता )

एवं हि एता मधुकरिका बहुषु विटपेषु संलग्ना अपि न तृप्यन्ति— कमप्येकं स्वायत्तीकृत्य, अपरानपि कदर्थयितुं बद्धदीक्षा लक्ष्यन्ते— भगवन् नीलाद्रिनाथ ! सर्वान्तरविदसि त्रायस्व प्रमोदम्— निश्चितं विजानासि

देव ! प्रमोदः स्वप्रियतमाया हृदयमेव नितरामपेक्षते तामेव काञ्चित् सहृदयां प्रियां प्रापय— विमोचय च दीनं पाश्चात्त्यानां दुर्गुणानेव अनुकुर्वन्तीभ्य ऐताभ्यः शिक्षितंमन्याभ्यः

( उद्दिश्य प्रणमति, प्रविशति विष्णुरथः )

विष्णुरथः— आयुष्मान् पुत्रवान् धनवान् विद्यावान् भव।

प्रमोदः— अहो ! स्वयमेव मातामहः— अपि तीर्थयात्रासु पथि क्षेमपूर्णं वर्त्तते जननी ? किम्वा पुरस्कृतवती ?

विष्णुरथः— प्रायः सुखेन वर्त्तते महादेवी ( मुद्रिकां समर्प्य ) इदं माङ्गलिकम्— अङ्गुरीयकं सहाशीर्भिः प्रेषितवती —

प्रमोदः— ( मुद्रिकां शिरसि कृत्वा, निर्वर्ण्य ) धन्यासि मुद्रिके— अमृतीकृतासि मातुः प्रसादेन ( सादरं प्रतिमुञ्चति )

विष्णुरथः— आयुष्मन् ! आज्ञप्तं महादेव्या— पुत्र, धारय अङ्गुलीयकं चिरमुज्ज्वलो राजस्व— अस्य पृष्ठे क्षोदितं यन्त्रं मणिबन्धे बिभ्रतीं कामपि बालिकां यत्नेन मार्गय- साहि पूर्वमेव तव पत्नीत्वेन निरूपिता —चिरान्निरुद्दिष्टा मृग्यमाणासीत् — इदानीं पुनः ममैव प्रमादेन दैवेन च वैरिणा अस्मदीयैर्जनैरानीयमाना पथि दस्युभिरपहृता निवेद्यते— चारांश्च नियोजयन्त्यस्मि— शीघ्रं च

प्रत्यावर्त्ते अनन्तरकरणीयाय इति— त्वमपि वत्स! अचिराल्लभस्व मत्प्राणाधिकां वत्सां मुदितामिति च ।

प्रमोदः— अम्ब ! एवं भवतु मातामह ! एवमेव संमाननीया जननी— विश्राम्यतु भवान्— पङ्कज ! विश्रामय अत्रभवन्तम् । [ नेपथ्ये ] यथा ज्ञापयति देवः ।

( विष्णुरथो गतः )

अम्ब ! एवं भवतु— सिध्यतु ते सर्वमङ्गलो मातृमनोरथः ।

( प्रविशति विलासः )

विलासः— शुभेयं सन्ध्या प्रमोद ! शुभं ते किञ्चित् प्रियमुपायनीकरोमि

प्रमोदः— ( सस्मितम् ) एवम् अस्तु विलास !

विलासः— प्रत्यासन्ना मधुराका

प्रमोदः— किं चित्रा तिलकवती फाल्गुनी ?

विलासः— सत्यमेव प्रम ! ततोऽपि विचित्रा इयं श्रीमती मधुराकादेवी पुष्पदुर्गस्य राजकुमारी ।

प्रमोदः— सा किमत्रागता ?

विलासः— ( क्षणं निर्वर्ण्य )सत्यं प्रम ? तवैव सुयोग्या सहचारिणी स्यात् श्रीमती मधुराका

प्रमोदः— भवतु विलास ! " पूर्वजन्मनि या कन्या पूर्व"......

विलासः— विरम प्रमोद ! नियतं त्वं तामुद्वह इति न मे अभि-

प्राय:— तचाहमेवं वदामि— परं— समानश्रीकयो र्वधूवरयोः संयोगं कल्पयितारो वयम्परं भ्रातस्त्वं स्वयमेव बहुशः परीक्षस्व।

प्रमोदः— एवं वा भवेत् विल ! सम्प्रति राज्यं क्षुधायाः एहि
(तं हस्तेन गृह्णाति)

विलासः— यामि तावत्।

प्रमोदः— अभुक्त्वैव ? धिक् एहि (प्रस्थितौ)

---

पृथमाङ्के पंचमदृश्यम्

(वनम् एकाकिनी शिलातले उपविष्टा मुदिता)

मुदिता— (गीतम्)

जीवने वेदनाभरिते मुदिते मुञ्च रे नीरषमश्रु धाराः
तव भाले महापापमसीमये नियतिनिश्चिता शुचा गभीरा
सम्पदपेता स्वजनैरहिता असहाया त्वं शङ्किता भीता
माकुरु मनसा कामपिसुखितां काननमिदन्ते घोरकारा ॥

(प्रविशति आभीरी)

आभीरी— सखि ! किमेवं सर्वानपि वनवासिनो रोदयसि ?

मुदिता— सखि ! किं न जानीषे— आत्मानं परानपि रोदयितुम्

एष भाग्यहीनाया मुदिताया जीवलोकेषु अवतरणम् ?

आभीरी— मैवं भगिनि ! याहि नामतोऽपि मुदिता सात्वं कथं रोदनकारणं भवसि ? धियस्व— न त्वादृशाभिर मेवं भवितुमर्हन्ति।

मुदिता— अधिकारिदारिके ! आशा हि धैर्य्यस्य कारणम् कुतः पुनः सर्वतो निराशाया मुदिताया स्तदवकाशः प्रियसखि !

बाल्ये मृतैव जननी जनकोऽनु यातः
प्राणादपि प्रियतमां भगिनीं न विन्दे।
वन्यैर्बलादपहृता पशुभिर्वसन्ती
धैर्य्यं भविष्यदथवा कथमालपामि ?

( रोदिति आभीरी अश्रुमुखी जाता )

आभीरी— ( तामालिङ्ग्य ) शपितासि मुदि ! आभीर्य्य जीवनेन नेतः परमपि रोदयास्मान्— यद्यहं वटदेव्याः सेविका शीघ्रं परावर्त्तेत तवेयं अवस्थाम्।

मुदिता— ( तदुरसि मुखं निक्षिप्य ) आभि ! त्वमसि मुदितायाः पशुभिर्निवसन्त्याः सहचरी— देवकन्या— सखि ! शपथःमम अर्द्धजीवन कारणं तवैव साहचर्य्यम्

आभीरी— ( तस्या मुखं लालयन्ती)मुदि ! आभीर्य्याजीवितंशुभं ते भूयात्।

( प्रविशति पिच्छिला )

पिच्छिला— आभिरे आयातं युवां यावकरागं मार्गयामः

आभीरी— अग्रतो गच्छ पिच्छिले।

पिच्छिला— एवं— यामि— तत्रआर्य्ये क्षीरीफलानां राज्यम्

( प्रस्थिता उभेस्मित मुख्यौ जाते )

मुदिता— आभि ! समाहितः श्रूयते शवराणां विद्रोहः

आभीरी – तस्यैव सैनिकानां नेतुः श्रीमतः प्रयत्नेन शान्ताः शवराः— राजनि स्वप्रार्थितं निवेदयितुमुद्युक्ता- वर्त्तन्ते ।

मुदिता-- फलतु एतेषां मनोरथः

आभीरी— सर्वं साधयेत् भवत्याः शुभाशंसा ( नेपथ्यं वि- लोक्य ) सखि ! काञ्चन्याः कोरकपटलं— तव कबरी योग्यम् ।

( तां हस्तेनादाय गता । प्रविशति पारिजातः )

पारिजातः— करुणां मनसो मुदं ददानां
तरुणाताम्रसरोरुहायताक्षीम् ।
ललितां कलिताखिलाभिलाषां
वलिताङ्गं क्व पुनर्निपीडयामि ॥

प्रिये ! क्षमस्व अपराधिनं पारिज़ातम् अहं हि प्रियो- पस्थानसुखादपि राज़ादेशं बहु मन्यमानोऽत्राऽगच्छम् पुनरचिराद्द्रष्टास्मि भवतीम्—कृपया परमेश्वरस्य अना-

यासेन शामितः शवराणां राजनि विद्रोहः ।

( प्रविशति राज्ञो दूतः )

दूतः— महाभाग ! महाराजस्य आज्ञापत्रिका— ( समर्प्य-नमस्करोति )

पारिजातः— ( पठन्— स्वगतम् ) कथम्—अद्यापि निर्दयो-महाराजः— न इदानीमपि पारिजातः करुणां प्राप्नु-यात् ( प्रकाशम् ) भद्र ! इदानीमागताःसर्वे विश्रम्यत

दूतः— यथाज्ञापयति महाभागः ( गतः )

पारिजातः— उत्तरान्तवासिनां प्रतिपक्षत्वेन प्ररोचनीया दक्षिण पश्चिमीयाः— किमेवंविधस्य राजादेशस्य कारणं स्या-त् ? कथं शवरा अपि राजादेशविलंघिनः सम्भवन्ति कः पुनरेषां नेता— यमत्र दृढं दण्डयितुमिच्छति महा-राजः— भवतु तावत्— शान्त्या यदि साधयितुं शक्नु-याम्— यामि— प्रेषयामि तावद्दूतान् [ गतः ]

इति प्रथमाङ्कः ।



निःसंशयकारणं तप्तं तपः । तथापि जगन्मङ्गलभूतया सुकुमारशरीरया किमर्थमिदं घोरं तपस्तप्यते ।

**पार्वती**--हृष्टाऽहं यदिदं पृष्टं भवत्या । यतो महतामनुमोदनेनाऽनुग्रहेण च सत्कर्म सफलं निश्चयमेव भवति । श्रूयतां मत्सङ्कल्पो निवेदितो मत्सख्या ॥

**जया**--राजपुत्री परमेश्वरमेव पतिमवाप्तुं तपः करोति । कदा सः जगत्प्रभुः सदयो भवति न जाने ।

**परमेश्वरः**--कथमिदमनया कृतम् । इयं सर्वलोकमनोहारी सर्वाङ्गसुन्दरी तन्वी प्रार्थनीयतमा । अनुचितमेतद्यत्सा प्रार्थयत इति ।

कल्पकवृक्षो लोके सुरमहितः सर्वलोककमनीयः ।
कृपणं नरमिह करुणं वांछेद्भूमिं कथं नेतुम् ॥ ३ ॥

**जया**--कल्पकवृक्षेणापि सर्वमङ्गलकारणं कथं न प्रार्थनीयम् ।

**परमेश्वरः**--कोऽयं सर्वक्षेमविघाता ।

**जया**--परमेश्वरः ।

**परमेश्वरः**--(विहस्य)

अमङ्गलनिदानं सः कथं मङ्गलकारणम् ।
कपाली च विरूपाक्षः सर्पाभरणभूषितः ॥ ४ ॥

भसितालिप्तसर्वाङ्गो रुद्रभूमिप्रियः सदा ।
भिक्षाटनो गणस्वामी वृद्धो वृषभवाहनः ॥ ५ ॥

अज्ञातवंशो भीमश्च विषाहारो दिगम्बरः ।
अकिंचनप्रियो नित्यं त्यक्तसर्वपरिग्रहः ॥ ६ ॥

एकाकी कृत्तिवासाश्च प्रदोषे ताण्डवप्रियः ।
कथं सोऽर्हति लोकस्य रत्नभूतां सुमध्यमाम् ॥ ७

पार्वती---(ससंभ्रमं स्फुरितोत्तराधरम् ।)

चन्द्रसूर्याग्निनेत्रं तं सर्वलोकमहेश्वरम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ ८ ॥

शुद्धस्फटिकसंकाशं सच्चिदानन्दविग्रहम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ ९ ॥

महेश्वरं महादेवं नित्यशुद्धं भवौषधम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥१०॥

मन्दस्मितं दयामूर्तिं कोटिकन्दर्पविग्रहम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥११॥

गुरुं तं सर्वलोकानां दक्षिणामूर्तिरूपिणम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ १२ ॥

गङ्गाधरं त्रिणेत्रं तं चन्द्रमौलिं जटाधरम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ १३ ॥

नीलकण्ठं महाकालं जगदानन्दकारिणम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ १४ ॥

सत्यरूपं जगन्नाथं शङ्करं मुक्तिदायकम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥१५॥

महापापहरं शान्तं पुण्यमूर्तिं शिवं परम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ १६ ॥

सर्ववेदान्तवेद्यं तं योगिध्येयपदाम्बुजम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ १७ ॥

केदारेशं च विश्वेशं नटेशं सुन्दरेश्वरम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ १८ ॥

विभूतिदीप्तं पुण्याङ्गं नागरत्नविभूषितम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ १९ ॥

पुराणपुरुषं देवं लोकमूलं स्वयंभुवम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २० ॥

एकमेवाद्वितीयं तं महावाक्योपदेशकम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २१ ॥

समामृतविषं शुद्धं कैवल्यपददायकम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २२ ॥

आनन्दनटराजं तं चिन्मयानन्दविग्रहम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २३ ॥

शिवं शान्तं परं पूर्णं साक्षान्मन्मथमन्मथम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २४ ॥

कृपानिधिं जगद्वन्द्यं सर्वज्ञं विष्णुवल्लभम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २५ ॥

शाश्वतं तारकं नित्यमष्टमूर्तिं तपस्विनम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २६ ॥

शब्दशास्त्रोपदेष्टारं नृत्याचार्यं कलानिधिम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २७ ॥

वेदागमप्रदातारं मन्त्रमङ्गलदायकम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २८ ॥

त्रिकालसत्यं तं नित्यं पितामहपितामहम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ २९ ॥

स्थितं वटतरोर्मूले युवानं सुरसुन्दरम् ।
न त्वं जानासि मे नाथं जगन्मङ्गलमङ्गलम् ॥ ३० ॥

यथोदितं तथैवास्तु भगवान्परमेश्वरः ।
स एव प्राणनाथो मे तद्वशं मम जीवितम् ॥ ३१ ॥

नाहं तिष्ठामि यत्रासौ दूषयन्परमेश्वरम् ।
तिष्ठत्येहि यतः प्रोक्तौ पापौ श्रोता च दूषकः ॥

चिन्मयानन्दमूर्तिर्यः संसारार्णवतारकः ।
महाकारुणिको योगी शंकरो मे प्रसीदतु ॥ ३३ ॥

नष्टमार्गान्भवाटव्यां दुःखपूर्णांश्च विह्वलान् ।
मार्गबन्धुः सदा पाति शंकरो मे प्रसीदतु ॥ ३४॥

यस्य स्मरणमात्रेण पापौघः शून्यतां व्रजेत् ।
ज्ञानपद्मस्य सूर्यो यः शंकरो मे प्रसीदतु ॥ ३५ ॥

सर्पहारी च संहारी विहारी हृदयाम्बुजे ।
विषाहारी मनोहारी शंकरो मे प्रसीदतु ॥ ३६ ॥

त्रातुं लोकान्भयत्रस्तान्क्ष्वेलं घोरं हि योऽपिबत् ।
कारुण्यमूर्तिरुग्रोऽपि शंकरो मे प्रसीदतु ॥ ३७ ॥

भगीरथस्य भक्तस्य त्रातुं दग्धान्पितामहान् ।
गङ्गावतारं यश्चक्रे शंकरो मे प्रसीदतु ॥ ३८ ॥

अभिषेकप्रियः शुभ्रः महाकैलासनायकः ।
आत्मारामः परं ब्रह्म शंकरो मे प्रसीदतु ॥ ३९ ॥

[नेपथ्ये आकाशवाणी ।]

पार्वति, कोपं मा कुरु। तपसाराधितः परमेश्वर एवागतः। सम्यगवलोकय तम् ।

**परमेश्वरः**—सत्यमेवैतत् । प्रसन्नोऽस्मि संतुष्टोऽस्मि संवीक्ष्य तपःप्रभावं प्रेमभक्तिं च ते। यद्यद्वांछितं तद्ब्रूहि। ददामि सर्वं तत् ।

**पार्वती**--(प्रणम्य) जगन्नाथ, प्रसीदतु भगवान् । अहं तु भवदधीना भवत्प्रथमकिंकरी मज्जीवितं त्वत्पादारविन्दयोरर्पितवती । एको वरः सद्य एव देयः ।

**परमेश्वरः**—ब्रूहि यद्यद्वाञ्छितम् ।

**पार्वती**—भवत्प्रसादबलेन माङ्गल्यभिक्षां अहं रत्यै दत्तवती। भगवता तद्वरं पूरणीयम् ।

**परमेश्वरः**—प्रिये पराशक्त्या परदेवतया भवत्या परमकृपयावलोकितायाः भग्नमनोरथत्वं कथं भवति । तथैवास्तु।

[इति निष्क्रान्ताः सर्वे ।]

इति चतुर्थोऽङ्कः ॥

---

## पञ्चमोऽङ्कः ॥

---

[ ततः प्रविशति कृतविवाहमङ्गलवेषौ पार्वतीपरमेश्वरौ हिमवत्सहितौ ।]

**परमेश्वरः**——प्रिये समवलोकयेमं लोकं भवतीप्रसादोज्जीवितम् । यद्यत्पूर्वनष्टरसं तत्सर्वमपि सरसं जातम् ।

**पार्वती**—— सर्वमपि भवत्कृपाविलास एव ।

**हिमवान्**—धन्यतमोऽहं यज्जगतः पितरौ मद्दुहितृजामातरौ । भवत्कृपा सदैवास्तु मयि ।

**परमेश्वरः**——सदैवायं पुण्यदेशः आर्यावर्तो भवता शत्रुभ्यः रक्षितव्यः ।

**हिमवान्**—— यथाज्ञापयतीश्वरः ।

[ततः प्रविशति रतिवसन्ताभ्यां सह कामः ।]

**कामः**——(पार्वतीपरमेश्वरौ प्रणम्य) यूयं जगतामादिदंपती लोकानुग्रहार्थं कृतलीलाविवाहौ मह्यं वरप्रदौ आज्ञाप्रदौ च भवेतामिति मे प्रार्थना । सर्वमृत्युनिवारिण्याः कृपया मृत्युंजयानुग्रहो मे लब्धः पुनर्जीवलाभरूपः । भवदाज्ञां नित्यमेवेतःपरं करिष्यामि ।

**परमेश्वरः**—(कामं प्रति)

धर्मप्रियो भवान्नित्यं भवेदीश्वरकिंकरः ।
पूर्णानन्दस्त्वया देयो धर्म्यो रागो भवेद्यदि ॥ १ ॥
मन्मथत्वं च मारत्वं मदनत्वं विहाय हि ।
कन्दर्पत्वं च संत्यज्य दर्पकत्वमनंगताम् ॥ २ ॥
पञ्चेषुत्वं स्मरत्वं च रतीशत्वं च कामताम् ।
अवलम्ब्य सदा शाधि त्रील्लोँकान्धर्मवत्सलः ॥ ३ ॥

**कामः**—यथाज्ञापयति लोकनाथः ।

**रतिः**—(पार्वतीं प्रति) पूर्णकामाहं भगवतीप्रसादेन ।

सफलं तपो मदीयं पातिव्रत्यं च मामकं सफलम् ।
यदियं हि लोकमाता प्रसादमकरोन्मयि श्लाघ्यम् ॥

**पार्वती**—भवत्या स्मरेण च भगवदाज्ञां स्मृत्वा यथा धर्मव्यतिक्रमो न भवेद्यथा शिवभक्तिः भुक्तिमुक्तिप्रदा जायेत तथा मनःप्रपञ्चः परिपालनीयः ।

**रतिः**—यथाज्ञापयतीश्वरी ।

[ततः प्रविशतः महेन्द्रः बृहस्पतिश्च ।]

**महेन्द्रः**—सर्वलोकानामपि महानभ्युदयो जातोऽद्य ।
परमेश्वरस्य करुणा परिपूर्णा पार्वतीतपःफलरूपा ।

**बृहस्पतिः**— वेदवेद्यस्य परमपुरुषस्य संकल्पः तस्यैव विदितः नान्यस्य ।

**परमेश्वरः**—सर्वं यदभिमतं युवयोस्तत्तथैव भवतु ।

[ततः प्रविशन्ति, पुण्डरीकः, सरोजिनी, श्यामलादासः, दुर्गादासः, राजराजश्च ।]

**राजराजः**— कामेश्वरकामेश्वरीकल्याणोत्सवेन पवित्रीकृता धरित्री । अयं पुण्यदेशः आर्यावर्तः धर्मनिरतो भूयादिति भगवत्संकल्पं प्रतीक्षे ।

**परमेश्वरः**—तथैवास्तु ।

**पुण्डरीकः**—धर्माविरुद्धकामैः परिशुद्धहृदयैः जगती पूर्णा भवेदिति मे सविनयप्रार्थना ।

**सरोजिनी**—रसिकाः देशानुरागपूर्णाः ईश्वरभक्तियुक्ताः सर्वकलानिपुणाः भवेयुरिति प्रार्थये ।

**पार्वतीपरमेश्वरौ**— तथैवास्तु ।

**दुर्गादासः**—काव्यकलारसस्फूर्तिः तज्जनितानन्दानुभवश्च सर्वत्र विजयतामिति याचे ।

**पार्वतीपरमेश्वरौ**—तथैवास्तु ।

दुर्गादासः—

कामाक्षि कामेश्वरदेवि माये
भवत्कटाक्षोत्थसुधाप्रवाहैः ।
कामाग्निसंदग्धमनःप्रदेशं
कारुण्यमूर्ते शिशिरीकुरुष्व ॥ ५ ॥

मत्पापशत्रुं हि विजेतुकाम-
स्त्वत्पादपद्मं शरणं व्रजामि ।
मुक्तिप्रदाने खलु दीक्षितं य-
न्मोहाटवीमोहितमानसानाम् ॥ ६ ॥

पापालयं पामरहृत्प्रदेशं
पाषण्डनास्तिक्यमतप्ररोहैः ।
कामाहिभिः संततमेव पूर्णं
देवालयं ते हि कथं करोमि ॥ ७ ॥

निधेहि मे मानसहेमपीठे
पदद्वयं पार्वति जन्मभारम् ।
त्यक्त्वा ततो मोक्षपदं व्रजेयं
क्षेमप्रदे केवलचित्स्वरूपे ॥ ८ ॥

आरोढुमाहुस्तव भक्तिसौधं
सोपानभूतं बहुपुण्यकर्म ।
पापात्मनो देहि करावलम्बं
कारुण्यरूपं परमेश्वरि त्वम् ॥ ९ ॥

**पार्वती**—भक्तान्सदैव रक्षिष्यामि परमेश्वरसंकल्पानुसार-
मिति प्रतिजाने ।

**श्यमालादासः**—(गायति)

पल्लवि ।

सुधामयी मयि भवतु जगदम्बा ।

अनुपल्लवि ।

सर्वमनोहरमङ्गलमञ्जुलवेषा ।

चरणम् ।

काव्यसंगीतकला
भक्तदत्तमुक्तिफला—सुधा.

(गायति)   पल्लवि ।

जगन्मोहनसंगीतं विलसतु

अनुपल्लवि ।

किन्नरगन्धर्वनारदप्रियं—जगन्मो.

चरणम् ।

संजीविनीधरवातात्मजप्रियं

मङ्गलश्यामलावाणीप्रियं — जगन्मो.

**पार्वती**—तथैवास्तु । रते किमतःपरं ते प्रियं करोमि ।

**रतिः**—भगवतीदर्शनानन्तरं किं प्रार्थनीयम् । तथापीद-मस्तु भरतवाक्यम् ।

**विस्तीर्णे भूतलेऽस्मि-**
**न्विलसतु नितरां शान्तिसाम्राज्यलक्ष्मीः ।**
**देशोऽयं भारताख्यं**
**प्रथितसुखमयो धर्ममूलं च भूयात् ॥**
**वैषम्यं रागजन्यं**
**भवतु च शमितं देशभक्तिप्रभावात् ।**
**वैदग्ध्यं सर्वशास्त्रे-**
**ष्वपि सकलकलास्वस्तु चित्ते जनानाम् ॥**

(इति निष्क्रान्ताः सर्वे ।)

**इति पञ्चमोऽङ्कः ॥**

इति रतिविजयनाटकं संपूर्णम् ॥



[नेपथ्ये आकाशवाणी ।]

पार्वति, कोपं मा कुरु। तपसाराधितः परमेश्वर एवागतः।
सम्यगवलोकय तम् ।

**परमेश्वरः**—सत्यमेवैतत् । प्रसन्नोऽस्मि संतुष्टोऽस्मि
संवीक्ष्य तपःप्रभावं प्रेमभक्ति च ते। यद्यद्वांछितं तद्ब्रूहि ।
ददामि सर्वं तत् ।

**पार्वती**—(प्रणम्य) जगन्नाथ, प्रसीदतु भगवान् । अहं तु
भवदधीना भवत्प्रथमकिंकरी मज्जीवितं त्वत्पादारविन्दयो-
रर्पितवती । एको वरः सद्य एव देयः ।

**परमेश्वरः**—ब्रूहि यद्यद्वाञ्छितम् ।

**पार्वती**—भवत्प्रसादबलेन माङ्गल्यभिक्षां अहं रत्यै दत्तवती।
भगवता तद्वरं पूरणीयम् ।

**परमेश्वरः**—प्रिये पराशक्त्या परदेवतया भवत्या परम-
कृपयावलोकिताया भग्नमनोरथत्वं कथं भवति । तथैवास्तु ।

[इति निष्क्रान्ताः सर्वे ।]

इति चतुर्थोऽङ्कः ॥

---

करभकः— किम्वात्र श्रोतव्यम्— इतः प्रभृति पार्वत्यप्रदेशेषु राजपुरुषाणां प्रवेशोऽपि न सम्भवति ।

वीरभद्रः— वर्द्धते आस्पर्द्धा क्षुद्राणाम् ।

करभकः— का वात्र आस्पर्द्धा— यथायथमिदम् ।

गोरक्षनाथः— मूर्ख ! सारमेयस्यापि सिंहगोष्ठीषु यथेष्टं प्रलापः— न आस्पर्द्धा— परन्तु आसन्नमरणत्वम् ।

करभकः— क्षाम्यतु महाराजः—को वात्र मानवेषु जात्या सारमेयो भवेत् —को वा सिंहः ? कालबलेन भाग्यपरिवृत्त्या- हि सारमेयप्रायाणामपि कदाचित् सिंहत्वं — कदाचित् सिंहसदृशानामपि सारमेयत्वं सम्भवेत्— चिरं रात्रिरेव न स्यान्नवा दिनमेव ।

गोरक्षनाथः— धिक् , नायमुपदेशस्यावसरः ।

करभकः— किम्वा उपदेशेन ? युक्तं निवेदयामि— गतः स कालः— यत्र निर्दिष्टानां केषाञ्चित् शासनम् आयत्तम् । इदानीमुद्बुद्धाः प्रकृतयः —जागरिता जातिधर्मनिर्विशेषं मनुष्याः— पृथिव्यां सर्वे एव मानवाः अनन्यवशत्वेन सकलकृत्यनिर्वहणार्थं समर्था जाताः । इतः परं व्यक्तिविशेषस्य, देशविशेषस्य साम्राज्यमधिकारो वा न शोभेत न वा तिष्ठेत् । यः स्वबुद्ध्या प्रजासु स्वातन्त्र्यं समर्पयेत् राजा, तत् तस्यैव शोभनम्— अन्यथा बलाद्विघट्यमानस्य राजमन्यस्य अपमानलाभ एव अधिकः स्यात् ।

गोरक्षनाथः— धिक्— प्रलापोऽपि प्राणनाशं वरयेत् मूर्खस्य !

कः कोऽत्र भो ! वन्दीकुरुत जाल्मम्—

( सैनिकद्वयं प्रविश्य, करभकं बध्नाति )

नयत— निक्षिपत तमोगर्भायां गह्वरायां यावदन्या-

देशम् ।

सैनिकः— यथाज्ञापयति देवः ।

करभकः— स्वहस्तेन स्वजिह्वाच्छेदनं जातं भवतः ।

( सैनिकद्वयं वन्दिमादाय गतम् )

वीरभद्रः-- देव ! शीघ्रमेव दृढं शमयितव्या मूर्खा वन्याः । परं

वर्द्धते पापानां दुर्मत्तता ।

गोरक्षनाथः— बाढम् भद्र ! इदानीमेव ज़ाल्मान् अभियामः

मूलच्छेदनमेवैषां नितरामावश्यकम्, एहि ।

वीरभद्रः— यथाज्ञापयति देवः ( उभौ प्रस्थितौ )

---

द्वितीयाङ्के षष्टदृश्यम् ।

( वने दोलाभिः क्रीडन्त्यः मुदिताभीरीपिच्छिलाः )

गीतम्— सुखयतु ते सखि दोला

मारुत परिचित लतिका लोला । ०।

नूतनयौवन विकशनशोभन—

सुरभितमा तव तनुरतिललिता

खेलतु रुचिरं तरलतरङ्गे—

रजनीकरकलाप्रतिफलिता । १ ।

दिशि दिशि चकितं चालय नयने
अकलुषसरसिजमोहनलीले।
उपचयमयतां कुसुमविलासो—
निरलस मनसिज यिह मधुकाले ।२। १

मुदिता— सखि ! आभीरि ! यामोऽद्य जननीम् ।

आभीरी— यामः सखि ! त्वां द्रष्टुम् उन्मना जननी ।

मुदिता— ममैव समानदुःखवती सा ।

आभीरी— परं युवयोरुभयोरपि दुःखानि सममुपशाम्येयुः ।

मुदिता— आशावति ! आशापरम्परया एव मुदिताथा जीवनं धारयसि

पिच्छिला— अपि आभि ! इदानीमेव यामः— किं वा जनन्या उपहरामः ।

मुदिता— किं नास्ति ते यावकभारः ?

पिच्छिला— ओः— सर्वा एव मां यावकं यावकमित्युद्वेजयन्ति ! न वा काप्यन्या यावकार्थं वनाद्वनान्तरं याति ? ( दुःखिता जाता )

मुदिता—( तामालिङ्ग्य ) नैवं पिच्छिले— त्वत्तो यावकमवश्यं वहुमन्यते जननी— गच्छ— किञ्चिदुपहर— आवां तातम् अनुज्ञापयावः ।

पिच्छिला— एवं भवतु ( प्रस्थिता )

आभीरी— क्रुद्धा जाता बालिका—

मुदिता— परन्तु पिच्छलिका परं प्रियास्माकम् ( विलोक्य )
आयाति तातः ।

( प्रविशतः मत्तमयूरलोहितकौ )

मत्तमयूरः— किमरे ! किमादिशति स्वामी पारिजातः ?

लोहितकः— भट्टारक ! एवं भट्टारकं विज्ञापयति स्वामी—अचि-
रात् काकपक्षाः कपोतपक्षाश्च समं राजपुरुषान् अभिया-
स्यन्ति, सन्नद्धा भवत यूयमिति ।

मत्तमयूरः— एवं भवतु—मदाज्ञया सर्वानिधमादिश [ते दृष्ट्वा]
किमरे आभि ! मुदि ! नाद्यापि उपशाम्यति क्रीडा ?

आभीरी— तात ! सममद्य वयं तिस्रो जनन्या वन्दनार्थं तत्र
यामः ।

मत्तमयूरः— का सा जननी—आं ज्ञातं सैव बालिका अवतंसकेन
अवरुद्धा ।

आभीरी— नेदानीमवरुद्धा— परन्तु देवीत्वेन स्थापिता सदु-
पदेशेन सूत्रयज्ञादिना च वन्यान् परिष्कुर्वन्ती जननी
वर्त्तते ।

मत्तमयूरः— आं— एवम् आभि !

आभीरी— तात ! इदानीमेव गन्तुमिच्छामः ।

मत्तमयूरः— यात वत्साः— एहि लोहित ! [ तेन सह गतः ]

( प्रविशति छद्मतापसवेशः प्रमोदः )

प्रमोदः— दस्युभिरपहृतां मुदितां मातुर्निशम्य, मत्तमयूरकमेव

# पञ्चमोऽङ्कः ॥

---

[ ततः प्रविशति कृतविवाहमङ्गलवेषौ पार्वतीपरमेश्वरौ हिमवत्सहितौ ।]

**परमेश्वरः**--प्रिये समवलोकयेमं लोकं भवतीप्रसादोज्जीवितम् । यद्यत्पूर्वनष्टरसं तत्सर्वमपि सरसं जातम् ।

**पार्वती**-- सर्वमपि भवत्कृपाविलास एव ।

**हिमवान्**—धन्यतमोऽहं यज्जगतः पितरौ मद्दुहितृजामातरौ । भवत्कृपा सदैवास्तु मयि ।

**परमेश्वरः**--सदैवायं पुण्यदेशः आर्यावर्तो भवता शत्रुभ्यः रक्षितव्यः ।

**हिमवान्**-- यथाज्ञापयतीश्वरः ।

[ततः प्रविशति रतिवसन्ताभ्यां सह कामः ।]

**कामः**--(पार्वतीपरमेश्वरौ प्रणम्य) यूयं जगतामादिदंपती लोकानुग्रहार्थं कृतलीलाविवाहौ मह्यं वरप्रदौ आज्ञाप्रदौ च भवेतामिति मे प्रार्थना । सर्वमृत्युनिवारिण्याः कृपया मृत्युंजयानुग्रहो मे लब्धः पुनर्जीवलाभरूपः । भवदाज्ञां नित्यमेवेतःपरं करिष्यामि ।

चरणम् ।

संजीविनीधरवातात्मजप्रियं

मङ्गलश्यामलावाणीप्रियं—जगन्मो.

**पार्वती**—तथैवास्तु । रते किमतःपरं ते प्रियं करोमि ।

**रतिः**—भगवतीदर्शनानन्तरं किं प्रार्थनीयम् । तथापीद-
मस्तु भरतवाक्यम् ।

विस्तीर्णे भूतलेऽस्मि-
न्विलसतु नितरां शान्तिसाम्राज्यलक्ष्मीः ।
देशोऽयं भारताख्यं
प्रथितसुखमयो धर्ममूलं च भूयात् ॥
वैषम्यं रागजन्यं
भवतु च शमितं देशभक्तिप्रभावात् ।
वैदग्ध्यं सर्वशास्त्रे-
ष्वपि सकलकलास्वस्तु चित्ते जनानाम् ॥

(इति निष्क्रान्ताः सर्वे ।)

इति पञ्चमोऽङ्कः ॥

इति रतिविजयनाटकं संपूर्णम् ॥



करभकः— किम्वात्र श्रोतव्यम्— इतः प्रभृति पार्वत्यप्रदेशेषु राजपुरुषाणां प्रवेशोऽपि न सम्भवति।

वीरभद्रः— वद्‌र्धते आस्पर्द्धा क्षुद्राणाम्।

करभकः— का वात्र आस्पर्द्धा— यथायथमिदम्।

गोरक्षनाथः— मूर्ख ! सारमेयस्यापि सिंहगोष्ठीषु यथेष्टं प्रलापः— न आस्पर्द्धा— परन्तु आसन्नमरणत्वम्।

करभकः— क्षाम्यतु महाराजः—को वात्र मानवेषु जात्या सारमेयो भवेत्—को वा सिंहः? कालवलेन भाग्यपरिवृत्त्या-हि सारमेयप्रायाणामपि कदाचित् सिंहत्वं—कदाचित् सिंहसदृशानामपि सारमेयत्वं सम्भवेत्— चिरं रात्रिरेव न स्यान्नवा दिनमेव।

गोरक्षनाथः— धिक्, नायमुपदेशस्यावसरः।

करभकः— किम्वा उपदेशेन ? युक्तं निवेदयामि— गतः स कालः— यत्र निर्दिष्टानां केषाञ्चित् शासनम् आयत्तम्। इदानीमुद्‌बुद्धाः प्रकृतयः—जागरिता जातिधर्मनिर्विशेषं मनुष्याः— पृथिव्यां सर्वे एव मानवाः अनन्यवशत्वेन सकलकृत्यनिर्वहणार्थं समर्था जाताः। इतः परं व्यक्तिविशेषस्य, देशविशेषस्य साम्राज्यमधिकारो वा न शोभेत न वा तिष्ठेत्। यः स्वबुद्‌ध्या प्रजासु स्वातन्त्र्यं समर्पयेत् राजा, तत् तस्यैव शोभनम्— अन्यथा बलाद्वियुज्य-मानस्य राजमन्यस्य अपमानलाभ एव अधिकः स्यात्।

गोरक्षनाथः— धिक्— प्रलापोऽपि प्राणनाशं घटयेत् मूर्खस्य !

कः कोऽत्र भो ! वन्दीकुरुत जाल्मम्—

( सैनिकद्वयं प्रविश्य, करभकं बध्नाति )

नयत— निक्षिपत तमोगर्भायां गह्वरायां यावदन्यादेशम् ।

सैनिकः— यथाज्ञापयति देवः ।

करभकः— स्वहस्तेन स्वजिह्वाच्छेदनं जातं भवतः ।

( सैनिकद्वयं वन्दिमादाय गतम् )

वीरभद्रः— देव ! शीघ्रमेव दृढं शमयितव्या मूर्खा वन्याः । परं वर्द्धते पापानां दुर्मत्तता ।

गोरक्षनाथः— बाढम् भद्र ! इदानीमेव ज़ाल्मान् अभियामः मूलच्छेदनमेवैषां नितरामावश्यकम्, एहि ।

वीरभद्रः— यथाज्ञापयति देवः ( उभौ प्रस्थितौ )

---

द्वितीयाङ्के षष्टदृश्यम् ।

( वने दोलाभिः क्रीडन्त्यः मुदिताभीरीपिच्छिलाः )

गीतम्— सुखयतु ते सखि दोला
मारुत परिचित लतिका लोला । ० ।
नूतनयौवन विकशनशोभन—
सुरभितमा तव तनुरतिललिता
खेलतु रुचिरं तरलतरङ्गे—
रजनीकरकलाप्रतिफलिता । १ ।

दिशि दिशि चकितं चालय नयने
अकलुषसरसिजमोहनलीले ।
उपचयमयतां कुसुमविलासो—
निरलस मनसिज यिह मधुकाले ।२। १

मुदिता— सखि ! आभीरि ! यामोऽद्य जननीम् ।

आभीरी— यामः सखि ! त्वां द्रष्टुम् उन्मना जननी ।

मुदिता— ममैव समानदुःखवती सा ।

आभीरी— परं युवयोरुभयोरपि दुःखानि सममुपशाम्येयुः ।

मुदिता— आशावति ! आशापरम्परया एव मुदिताया जीवनं धारयसि ।

पिच्छिला— अपि आभि ! इदानीमेव यामः— किं वा जनन्या उपहरामः ।

मुदिता— किं नास्ति ते यावकभारः ?

पिच्छिला— ओः— सर्वा एव मां यावकं यावकमित्युद्वेजयन्ति ! न वा काप्यन्या यावकार्थं वनाद्वनान्तरं याति ? ( दुःखिता जाता )

मुदिता— ( तामालिंग्य ) नैवं पिच्छिले— त्वत्तो यावकमवश्यं बहुमन्यते जननी— गच्छ— किञ्चिदुपहर— आवां तातम् अनुज्ञापयावः ।

पिच्छिला— एवं भवतु । ( प्रस्थिता )

आभीरी— क्रुद्धा जाता बालिका—

मुदिता— परन्तु पिच्छलिका परं प्रियास्माकम् ( विलोक्य ) आयाति तातः।

( प्रविशतः मत्तमयूरलोहितकौ )

मत्तमयूरः— किमरे! किमादिशति स्वामी पारिजातः ?

लोहितकः— भट्टारक! एवं भट्टारकं विज्ञापयति स्वामी—अचिरात् काकपक्षाः कपोतपक्षाश्च समं राजपुरुषान् अभियास्यन्ति, सन्नद्धा भवत यूयमिति।

मत्तमयूरः— एवं भवतु—मदाज्ञया सर्वानिषमादिश [ते दृष्ट्वा] किमरे आभि! मुदि! नाद्यापि उपशाम्यति क्रीडा ?

आभीरी— तात! सममद्य वयं तिस्रो जनन्या वन्दनार्थं तत्र यामः।

मत्तमयूरः— का सा जननी—आं ज्ञातं सैव बालिका अवतंसकेन अवरुद्धा।

आभीरी— नेदानीमवरुद्धा— परन्तु देवीत्वेन स्थापिता सदुपदेशेन सुनयज्ञादिना च वन्यान् परिष्कुर्वन्ती जननी वर्त्तते।

मत्तमयूरः— आं— एवम् आभि!

आभीरी— तात! इदानीमेव गन्तुमिच्छामः।

मत्तमयूरः— यात वत्साः— एहि लोहित! [ तेन सह गतः ]

( प्रविशति च्छन्नतापसवेशः प्रमोदः )

प्रमोदः— दस्युभिरपहृतां मुदितां मातुर्निशम्य, मत्तमयूरकमेव

तदपहर्त्तारं सन्दिह्य, अत्रागतोऽस्मि । अप्यचिरात् पश्यामि प्रियां मुदिताम् ?

मुदिता— सखि ! क एष युवतापसः स्यात् ?

आभीरी— सखि ! किं वास्य तापसत्वेन— युवत्वमेव भवत्या यथेष्टमनुसन्धानस्य कारणं भवति ।

( प्रविशति पिच्छिला )

पिच्छिला— आभि ! मुदि ! इदमानीतं यावकम्—आगच्छतम् ।

प्रमोदः – [ ता विलोक्य ] सरलतमाःखलु शवरकन्यकाः [ सविमर्शम् ] अये ! केयमसौ वन्यासु देवकन्या स्यात् ! अवश्यं— नेयं शवरकन्यका [ साग्रहं निर्वर्ण्य ] इयमेव सा स्यात्— अथवा सर्वमिव तां मन्यते अत्यन्तं समुत्सुकः प्रमोदः— भवतु—[ उपसर्पति, ता नमस्कुर्वन्ति ] सौभाग्येन युङ्क्त ।

नेपथ्ये— मार्गयत मार्गयत त्वरितम्—अस्मिन्नेव कस्मिन् उद्देशे दृश्येत तापसवेशधारी राजपुत्रः । वन्दीकरुत ।

आभीरी— किं त्वम् एभिर्मृग्यमाणो राजपुत्रः ? कष्टं संवृत्तम् ।

प्रमोदः— कथं ज्ञातोऽस्मि वन्यैरप्येभिः !

आभीरी— परन्तु वन्यानां नेतातू कश्चित् नागरिकः—परन्तु—परन्तु किंवा स्यात् ?

प्रमोदः— किम्वातू सम्भ्रमकारणम् ? नाहं वलहीनः—आगच्छन्तु मूषकाः ।

मुदिता— मैवं महाभाग ! कामं वलवानपि एकाकी अरण्येषु। श्रान्तश्च भवान् नैभिर्विरोधयताम् ।

प्रमोदः— परं—

मुदिता-- किम्वा परं— ( आभीरीं पश्यन्ती ) आभि !

आभीरी— जाने भगिनि ! नायमस्माकं शत्रुः— जनन्याः पीडयिता स एव राजा अस्माकं शत्रुः । एनं रक्षामो वयम् ।

मुदिता— परं—

आभीरी— नैव परं किञ्चित्— आगच्छतु भवान्— निभृतं सुखं च स्थापयामः ।

प्रमोदः— परन्तु—

आभीरी— नेदानीं अन्यस्य प्रसङ्गस्य अवसरः ।

मुदिता— एवं महाभाग ! अन्यत्र तवैवाभिमतं सिध्येत्— इदानीं पुनराभीर्य्या निर्द्देशं पालयितुमर्हसि ।

प्रमोदः— ( तां निर्वर्ण्य ) एवं भवतु देवि !

( सर्वे प्रस्थिताः )

पटक्षेपः



तृतीयाङ्के प्रथमदृश्यम् ।

( वनम्, शवराणां नृत्यम् )

सुखकरे चित्तहारिकानने कुरु मधुरगीती रे
पिब मधूनि पायय कामं पिब विभीति रे ।
मधुचितसूनजाले रे पटुमृदङ्गे ताले रे
नट नट नट सामोदं सरसकाले रे ॥

( द्रुतं सानन्दं च प्रविशति आभीरी )

आभीरी— अहो आनन्दः— अहो गर्वः— अहो पुरुषकारः— वन्यानामपि शवराणां स्वायत्तशासनं प्रमाणीकुर्वतां प्रतिनिधिः— वक्तुमपीदं न सुकरं, किं पुनः समाचरितुं— सुयुक्तोऽयं प्रतिनिधिः— धन्यमस्य साहसम्- अथवा स्वामिनः पारिजातस्य सुहृदि कीदृशो वा अन्यः पुरुषकारः सम्भाव्येत ? इतो दीर्घपथश्रमेण असुस्थशरीरो युवराजः प्रमोदचन्द्रः— दृढं चिन्तितास्मि वटदेवि ! शीघ्रमारोग्यं लभतां स महाभागः— सखी मे मुदिता परं नन्दतु— इदानीं तस्य सेवायां नितरां निरता मुदिः, जनन्याः सकाशमपि न यातुं प्रभवति— ततश्च कर्मसु नितान्तं व्यापृतापि जननी परमुत्कण्ठते एनां द्रष्टुम्— देव्याः प्रसादेन सर्वं शुभं भवतु ।

( प्रविशति पिच्छिला )

पिच्छिला— आभीरि ! यासि ?

आभीरी— क्व याचकार्थमेव ?

पिच्छिला— किमादानीं याचकैः ?— स्वामिन आदेशात् सर्वाअपि पल्लीवासिन्यः प्रचुरं वन्यानि खाद्यद्रव्याणि संगृह्णन्ति— किं न जानीषे त्वम् ? एहि—यामः—मुदिम् आह्वयावः—

आभीरी— कुत्रास्ते मुदिता ?

पिच्छिला— वटदेव्याः सकाशात् इदानीं कुटीरं प्रविष्टा ।

आभीरी— याहि पिच्छि ! अहं तां सहकृत्य, अनुपदमेव यास्यामि ।

पिच्छिला— भवतु—भवतु—युवां कदाचिदपि मां न सहकुरुथः (अभिमानिनी भवति)

आभीरी— [ तामादृत्य ]नह्येवं पिच्छिले तवापि का न स्निह्येत् ? शीघ्रं यामि— याहि ।

पिच्छिला— यथा ते रोचते, यामि । [ गता ]

[ ततः प्रविशति मन्थरं सचिन्ता मुदिता ]

आभीरी— [तां हठादालभ्य ] कथमिदं मुदि !

मुदित— [ सकरुणं तां निर्वर्ण्य ] किमिदम्—

आभीरी— इदानीमपि आभीर्याः शपथं लंघयस्येव ?

मुदिता— [ तामालिङ्गन्ती ] आभि ! प्राणाधिके ! किमेवं शङ्कसे— आभीरी पुनरत्र मुदितायाः जीवनधारणस्य कारणंपरं—आभि ! [ शोकोच्छ्वासं रुरुत्सति ]

आभीरी— [ तां सादरं सम्भावयन्ती] किंवा सखि ! विवक्षसि ?

मुदिता— किं वा विचक्षतु भाग्यहीना—स्वयं दुःखिनी मुदिः स्वेन संपृक्तमपि पीडयत्येव।

आभीरी— नैवं मे प्राण ! मुदितायाः सर्वस्यापि मुदएव सम्भवेयुर्न पीडा।

मुदिता— सखि ! किं वा स्यात् ?

आभीरी— किं वा अस्तु मुदि ?

मुदिता— कथं शीघ्रं सुस्थो भवेत् स महाभागः ?

आभीरी— 'स्नेहः पाप माशङ्कते'। इति यथार्थमेध— नपुनरत्र युवराजस्य लघीयसी पीडा कारणम्—अस्य श्रमः शीघ्रं शमिता— धीरा भव।

मुदिता— नेदानीमपि चेतनामाधाति।

आभीरी— अस्य श्रमज्वरस्य लक्षणमिदं मुदि ! न त्वमेवम् अधीरा भव— श्वः पश्यसि सुस्थं युवराजम्।

मुदिता— एवमस्तु आभि ! त्वदाशीर्भिः।

आभीरी— ( सस्मितम् )नैवमेव मुदि ! इतः समधिकमपि वयम् आशास्महे।

मुदिता— परम् असम्भवकल्पनया को वा लाभः ?

आभीरी— कथमिदम् असम्भवं मन्यसे ? युवयोः प्रथमदर्शने एव निश्चितमेवमवधारितं मया।

मुदिता— सखि ! नन्दयति सर्वानपि पूर्णः सुधांशुः— परन्तु—

आभीरी— परन्तु पूर्णिमया एवास्य समागमो भवति।

मुदिता— अपरमन्याभि ! श्रुतं स्यात् त्वया ?

आभीरी— किं तत् मुदि !

मुदिता— युवराजस्य गुप्तरक्षकं दृढं दण्डयितुमिच्छति भट्टारकः ।

आभीरी— ( विहस्य )अतश्च भवत्या एवमुद्वेगः नकिञ्चिदेतत् धीरा भव, ( प्रविशति पिच्छिला )

पिच्छिला— मया प्रस्थमिता नीवाराः संगृहीताः— युवां नाद्यापि अगच्छतम्— नपुनर्यातम् ।

आभीरी— कुतः पुनर्न यावः ?

पिच्छिला— ओः किञ्चिदपि नश्रूयते युवाभ्यां— स तु शबराणां प्रतिनिधिर्बन्दीकृतो राज्ञा— इदानीं चराः प्राप्ताः उत्त्यक्ताः सर्वत्र विचरन्ति ।

मुदिता— आभि ! दुष्करं संवृत्तम् ।

आभीरी— कोऽयमत्र भयस्यावसरः ?— वन्दीक्रियतां नाम— बलेन उपायेन वा एनं मोचयितुं समर्था एव वनवासिनः यतः तत्र देवी जननी— अत्र च स्वामी पारिजात एवां नेतारौ ।

मुदिता— नाद्यापि दुर्भाग्यात् मया वन्दिता जननी—न वा नमस्कृतः श्रीमानार्य्यः ।

आभीरी— अचिरादुभौ पश्यसि— ( पिच्छिलाम् ) पिच्छि ! किंवा इदानीं समाचरति स्वामी—

पिच्छिला— सर्वानपि शवरान् एकत्र समावेशार्थमादिश्य,

तैरेव अचिरात् मिलति इति कथ्यते।

आभीरी— पिच्छिले ! याहि मातर्दूतं— कुत्र वा अद्य शवराणां सभा भविष्यतीति विज्ञाय आगच्छ।

पिच्छिला— परमत्रैव युवां पश्येयम् ( गता )

आभीरी— एहि सखि ! किञ्चिदन्तरिते पिच्छिलां परिहस्य कौतुकं पश्यावः— सरलासौ कोपेनापि शोभना दृश्यते

( निष्क्रान्ते। प्रविशति चिन्तामन्थरः पारिजातः )

पारिजातः— [ परिक्रम्य ] बाढम्—एवमेव स्यात्— आगच्छतु गोरक्षहतकः— अनेनैव उपायेन तं वन्दीकृत्य सौजन्यं शिक्षयामः— परन्तु— नैव परन्तु इति किञ्चित् शठेषु शाठ्यमेव शास्त्रकारैर्विहितम्— परमनेन पापिष्ठेन सर्वत्र आततायित्वं परितन्यते, तस्मिन् दया सम्मानो वा युज्यते— य पुनरसौ सरलतमेषु सत्यप्रियेषु वन्येष्वपि निष्ठुरतमो दृश्यते। करुणायामपि अत्यन्तमनुचितं व्यवहरति— धिक् धिक् एनं पापतमम्— अयि प्रेयसि ! पारिजातस्य प्राणेभ्योऽपि गरीयसि कदा पुनरहं तव तादृशं सान्निधानमुपलभ्य धन्यो भवेयम्— कदा वा राहुमुक्तां सुधांशुकलामिव नितरां राजमानां भवतीं सम्भावयेयम् ?

नेपथ्ये मुदिता-- आभि ! नाद्यापि प्रत्यावर्त्तते पिच्छिला ?

पारिजातः— अहो किमिदम्— कस्याः पुनरयं स्वरसंयोगः ? किं किं— कथं— कथमत्रैव वर्त्तते करुणा !!—करुणे !

करुणे ! प्रेयसि !

नेपथ्ये मुदिता—एहि सखि ! यावत्तावत्—

पारिजातः—( विलोक्य ) अये सैवेयं— सैवेयं मम हृदयम् ( निर्वर्ण्य ) कथं— नैवेयं करुणा परन्तु— तस्याः सदृशी काचित्—अहो सादृश्यम् अहो साम्यम्—तामेव पुनर्बालिकाभूतां प्रियतमां मन्ये— कासौ ? कथं वा एवंविधाया अत्र सम्भवः !! ( प्रविशति पिच्छिला )

पिच्छिला— आमि ! आमि ! मुदि ! मुदि ! [ दृष्ट्वा ] अहो ! स्वामी [ नमस्करोति ]

पारिजातः— पिच्छिले ! क्व पुनर्मुदिः ?

पिच्छिला— किं तां न जानीते स्वामी— सा हि अस्माकं मुदिता साक्षात् जनन्या भगिनीव दृश्यते— भवतु अहमत्रैव तां सहानयामि— क्षणमत्र तिष्ठतु स्वामी—पश्यति ताम् [ गता ]

पारिजातः— कथम्, इयमेव मुदिः ! किमियमस्माकं मुदिता !! किमेभिरपहृता स्यात्— किम्वा असम्भवं दैवस्य । उक्तं पिच्छिलया जनन्या भगिनीव दृश्यते मुदिः । ततः का सा भवेज्जननी ?— ( ध्यायन् स्थितः )

( प्रविशति पिच्छिला मुदितां करेण आकर्षन्ती )

पिच्छिला— पश्यतु स्वामी— आनीता मया मुदिः ।

( तदन्तिकमुपस्थापयति )

मुदिता— कथम् आर्य्य एव—आर्य्य ! आर्य्य ! ( रुदती पादयोः-पतति )

पारिजातः— ( साश्चर्यानन्दं ताम् उत्थापयन् ) अहो !

मुदिता— मुदिता— भगिनि ! कल्याणि— कथमेवम्—

( तां साश्रु लालयति )

पटक्षेपः

---

तृतीयाङ्के द्वितीयदृश्यम् ।

( राजपथः, पटान्तः किञ्चित् धारयन् भुञ्जानः प्रविशति उदरमार्त्तण्डः )

उदरमार्त्तण्डः— ( भक्षयन् )

सर्वधर्मान् परित्यज्य स्वोदरं पूरयाम्यहम् ।
सर्वे वदन्ति मां मूर्खं सर्वान् मूर्खान् वदाम्यहम् ॥

( सावहेलं भक्षयत्येव—प्रविशति जीर्णवेशो व्ययभीरुः )

व्ययभीरुः— ( तं विलोक्य ) उपवासः— पुनस्त्र्यहोपवासः—

उदरमार्त्तण्डः— ( भक्षयन्नेव ) किं भोः ! किमत्र तिसृणामेकादशीनां सन्निपातो भवत्पञ्जिकासु दृश्यते ?

व्ययभीरुः— तिष्ठतु सा नित्या एकादशी, इदानीं नैमित्तिकम् उपवासस्य कारणम्

उदरमार्त्तण्डः— किं भूतस्य भवतः किमत्र प्रायोपवेश समाश्रयणसाहसस्य कारणं स्यात् ?

व्ययभीरुः— व्ययभीरुरहं मानी, व्ययः परमपातकम् ।
परस्यापि व्ययं दृष्ट्वा शुध्याम्युपवसन्नहम् ।

धिक् धिक् उदरपरायणतामिति एकाहोपवासः, ततोऽपि शतधिक् तदर्थं व्ययशीलत्वमिति द्वितीयः— तदनुषक्तानि दुष्टानि निवारयितुं तृतीयः।

उदरमार्त्तण्डः— ( यथेष्टं हसित्वा अन्धइवाभिनयन् ) कोऽसि- भोः अन्धीकृतोऽस्मि हतभाग्येन ( भक्षयन् ) आयुष्मन्! कच्चित् जीवसि त्वम् ?

व्ययभीरुः— स्वयमेव स्वान्ध्यस्य कारणं भवान् परत्र दोषम् अर्पयति।

उदरमार्त्तण्डः— ( चक्षुषी उन्मील्य ) धिक्— धिगस्तु पापान् उपवासपिशाचान्— विवाहे उपवासः— पितृमरणे उपवासः— धमर्थिमुपवासः— हिंसितुमारभमाणा- नामपि उपवासः—परं किमत्रभवतो जगदान्ध्यकल्पनाया मूलदोषः ?

व्ययभीरुः— धन्यम् एषां मूर्खत्वम्— अये—

यथेष्टं वनजातैर्वा पाथोभिर्वा प्रपूर्य्यते।
अस्य दग्धोदरस्यार्थे किं कार्य्यं हेमभस्मना॥

उदरमार्त्तण्डः— भो महामहाभीरो! युष्माकं गृहेषु यूयं— यद्यपि कदाचिदेव— किम्वा भक्षयथ ?

व्ययभीरुः— अये शाल्यन्नं प्रत्यहं भुञ्जनाः सुखं तिष्ठामः—

उदरमार्त्तण्डः— ( सावहेलं भक्षयन् )अस्मद्देशे सुलभाः शाल- यः, कानि वा अत्र भवतः भक्षणसाधनानि व्यञ्जनानि भवेयुः ?

व्ययभीरुः— अहो शिशुत्वम् !!

विनोपसेचनं किञ्चित् भोक्तव्यं भूतिमिच्छता।

नैकस्यापि प्रसङ्गोऽत्र वह्वपेक्षा विमूढता॥

( कश्चित् पुलिशः प्रविशति )

पुलिशः— अवधत्त—यं कञ्चिदपि वैदेशिकं पथि गच्छन्तमपि दृढं वध्नीतम्।

( एकः किंचिद्भक्षयन् अन्यः म्लानं पश्यन् ) यथादिशति,

( तौ एकतः, पुलिशश्चान्यतो गताः )

( प्रविशति छिन्नां शृंखलां हस्तयोर्धारयन् करभकः )

करभकः— ( शृंखलां किंचिदुच्चैःकृत्वा ) इयमेषां शृङ्खला ( नेपथ्याभिमुखं दृष्ट्वा ) इयमेतेषां पुलिशानां कार्य्य-दक्षता—अहं शृङ्खलाम् अनायासेन विच्छिद्य, स्वच्छन्दं वहिर्यामि— एते पुनर्नगरं निरुन्धन्तः कचुमूलदर्दुरत्वं प्रमाणीकुर्वन्ति, जयतु स्वामी श्रीपारिजातः ( प्रस्थितः )

( एकतो विष्णुरथः अन्यत उदरमार्त्तण्ड व्ययभीरू प्रविशन्ति, एतौ तं हठात् गृह्णीतः )

विष्णुरथः— किमेवं कुरुतं भद्रौ ?

उदरमार्त्तण्डः— वैदेशिको भवान्।

विष्णुरथः— कथमहं वैदेशिकः ? ततो वा निरोधस्य किं कारणम् ?

व्ययभीरुः— अवस्थितोऽपि त्वं कुसुमपुरीयः— सर्वान्

वैदेशिकान् निरोद्धुं पुलिशाध्यक्षस्य समादेशः— वन्दिः कारागृहात् पलायितः।

विष्णुरथः— ततश्च महादेव्या विश्वस्तं सचिवं ब्राह्मणमपि रोधयन्ति भवद्विधाः।

उदरमार्त्तण्डः— ( भक्षयन् ) किं वा कुर्वः—वैदेशिकत्वावच्छिन्नो भवान् न्यायतः निरुध्यते।

विष्णुरथः— धिक् त्यजतं मूर्खौ— महादेव्याः सकाशात् क्षिप्रमर्पणीयां पत्रिकामादाय महाराजं यामि अन्यथा दृढं दण्डितव्यौ— अपसरतम्।

( तौ अभिभूय गतः )

उदरमार्त्तण्डः— सखे भीरुतम! एहि— अहं सर्वदा भक्षयन् तिष्ठेयम्—त्वमपि तात! नित्यमुपवसेः एहि[ तं हस्तेनाकृष्य, प्रस्थितः ]

---

तृतीयाङ्के तृतीयदृश्यम्।

( उद्यानम्, प्रविशति समुत्फुल्लो गोरक्षनाथः )

गोरक्षनाथः— इयमचिरात् भविता अस्मन्मनोरथसिद्धिः नियतमस्तीदेशवनेचराः— नियतं विनश्येत् पारिजात-

हतकः— सुनियतं च प्रिया मे करुणावती लभ्येत—
अवश्यं जयेत् वीरभद्रः ।

( प्रविशति वीरभद्रः )

वीरभद्रः— वर्द्धतां महाराजः— करुणावान् भवतु ।

गोरक्षनाथः— ( तं सानन्दं पश्यन् ) सत्यं भूयात्ते वचनम् ?

वीरभद्रः— अनुज्ञापयामि महाराजम् ।

गोरक्षनाथः— गच्छ, विजयी भव ।

वीरभद्रः— देव ! प्रथममेव तामुपस्थापयितुमिच्छामि ततश्च
शबराणां दलनम् ।

गोरक्षनाथः— अवश्यं सिध्यतु ते मनोरथः ।

वीरभद्रः— यथाज्ञापयति महाराजः ( अभिवाद्य गतः )

गोरक्षनाथः— सिद्धप्रायाणि अभीष्टानि ( अनिमित्तमनुभवन् )
कथं गोरक्षनाथस्यापि मनोरथसिद्धिषु शङ्कावकाशः ?

( प्रविशति विष्णुरथः )

विष्णुरथः— विजयतां महाराजः ।

गोरक्षनाथः— ( तं प्रणमति )

विष्णुरथः— स्वस्त्यस्तु साम्राज्यलाभोऽस्तु, अखण्डितप्रतापोऽस्तु, अष्टोत्तरशत संवत्सर जीवितास्तु, महाराज !
इदं महादेव्या प्रेषितं पत्रम् ।

( पत्रमुपस्थापयति)

गोरक्षनाथः— ( गृहीत्वा ) विश्रामाय अर्हति भवान् ।

विष्णुरथः— यथादिशति महाराजः । ( गतः )

गोरक्षनाथः— (पत्रं पठित्वा क्रमशो मूढ इव उन्मत्त इवाभिनयन् क्षणं तूष्णींभूत्वा ) देवि ! देवि ! क्षमस्व क्षमस्व सुलभापराधं गोरक्षहतकम् —अत्यन्तमपराधी अयं हतकः ( पत्रं निरीक्ष्य ) "हैदेयं करुणा श्रीपारिजातस्य पत्नी" ओः— मर्मन्तुदा यातना— ओः — पशुप्रवृत्तीनां सर्वत्र अविशेषेण अवारितत्वम्— सैवेयं वत्सा करुणावती— सैवेयं स्वसुताया अपि अधिकं वात्सल्यस्थानं गोरक्षस्य प्रसन्ननारायणस्य शिशुकन्या—क्षमस्व देवि ! क्षमस्व— प्रसन्न ! प्रियमित्र ! क्व पुनः स्वर्गलोके सहचारिण्या भगिन्या मयूखमालया वर्तसे— पशुमपि गोरक्षहतकं युवां स्वगुणैरेव क्षन्तुमर्हथ— ओः— करुणे ! करुणे ! क्षमस्व वत्से ! क्षमस्व तव पितुः सखाय तदात्वे त्वयि तथा वत्सलं तवैव गौरपितृव्यम् - मुदिता—मुदितापि मे वत्सा तस्या अपि एवं परिणामः— ओः — मर्मच्छिदा यातना ( ध्यायति )

दूतः — ( प्रणम्य ) महाराज ! ( इत्यर्धोक्ते भयशोकादिमुद्रितो भवति )

गोरक्षनाथः— किम्वा विवक्षसि ?

दूतः— देव ! वनं छद्मवेशेन प्रविष्टो युवराजः न केनापि दृश्यते

गोरक्षनाथः— किं किम् ?

दूतः— वनं प्रविष्टो युवा... परितः ... वल्मीकस्तुमिन्छन्नरपि न उपलभ्यते ।

गोरक्षनाथः— नापीतः प्रत्यावृत्तः ?

( दूतः तूष्णीं स्थितः ) पुलिशाः ? गुप्तचराः ?

दूतः— न कश्चिदपि श्रीमन्तमुपलभते ।

गोरक्षनाथः— परम् ?( दूतः तूष्णीं तिष्ठति क्षणं निध्याय )भद्र ! गच्छ ! सावधानतया यथायथं मार्गयत ।

( स नमस्कृत्य गतः )

किमिदं नाम – मन्ये— गोरक्षहतकस्य दुरदृष्टपरम्परया एव सर्वमसम्भवमपि सम्भवति— अन्यथा कथं वत्सां करुणां प्रत्यपि एवं पाशवमाचरणं कुर्य्यान्मूढः— कथं वा राजपुरुषैः सहानीयमानाया मुदिताया दस्युभिरपहारः— कथं पुनः चिरायुष्मतः प्रमोदचन्द्रस्य एवमदर्शनम्— अदर्शनम्—वत्सस्य अदर्शनम् हृदय, स्थिरीभव। नेदानीं पापिष्ठस्य तव अनुशोचनं शोभनं भवेत्— ओः वन्यानामपि चिरात् राजभक्तानां विद्रोह इदानीं समारब्धः ! किं वा स्यात्--किं वा स्यात्—किं वा स्यात् !

(दूत प्रस्थितः, प्रविशति वराटकः)

वराटकः— किमिदम्—कथमिदम्—कथमुन्मत्तइव दृश्यते महाराजः— अहो राज्ञ उन्मादे कथं स्याद्राजकुलम् ? अपि शिरसः स्वास्थ्यहीनतायां भ्रान्ततायां स्व स्वं कार्य्यमुद्वोढुं शक्नुयुः करचरणादयः ? ईश्वर ! परं शुभं



भवतु महाराजस्य । अनुजीविनो वयम्—सुखं तिष्ठामः—

यामि तत्त्वं निरूपयामि ( गतः )

( पुनः प्रविशति गोरक्षः )

गोरक्षनाथः—करुणे ! करुणे ! करुणावति !वत्से !क्षमस्व, क्षमस्व
सत्वरं दर्शय तव तथाविधं मुखचन्द्रम्—शीघ्रं शान्ति-
मुपगच्छतु पापिष्ठोऽपि गोरक्षः— प्रमोद ! प्रमोद !
सत्वरं दर्शय आत्मानम् तात ! चिरंजीव—चिरंजीव—
अचिराल्लभस्व तां वत्सां मुदिताम्— अचिरात् सम्मा-
नय तव आर्य्ये पारिजातम्— पारिजात ! क्षमस्व क्षम-
स्व अचिरात् युष्मत्सकाशमेवगच्छामि— अयमहं
इतो यामि इदानीं यामि । ( वातुलवत् प्रस्थितः )



तृतीयाङ्के चतुर्थदृश्यम् ।

( गुप्तकुटीराभ्यन्तरम्, शय्यायामर्द्धशयितः प्रमोदः )

प्रमोदः— मुदि ! मुदि ! कस्तत्र एतादृशेन मयि महाभिनिवेशेन
लाभः स्यात्— यत्नेन अवधारितं मया— न तव मणि-
वन्धयोर्यन्त्वं दृश्यते— महाहृदयवति ! को वा जगति
तवैव रूपगुणसदृश्या उदारताया विनिमयः स्यात्—
मुदिते ! कावासीर्मम त्वं पूर्वासु जन्मपरिवृत्तिषु—
का वा सि इदानीम्—महीयसि ! परन्तु—अम्ब ! जननि!
न कदाचित्

प्रमोदस्तव आदेशाक्षराणामवमन्ता भवतु— क्षमस्व क्षमस्व मुदिते !

( प्रविशति हस्तौ संपुटीकृत्य मुदिता )

मुदिता— कथमिदमाश्चर्य्यम्—कां वा भवानपि मुदितायाः क्षमां सम्भावयति ! आदिश्यतां यथेष्टं दासजनः

प्रमोदः— मुदि ! आनन्दमयि ! ( समोहइव निर्वर्णयति )

मुदिता— यामि— पथ्यं किंचिदुष्णं व्यवस्थापितम्—

प्रमोदः— मुदिते ! किम्वा उष्णेन पथ्येन वा ? कामं तवैव सन्निधानं सर्वेषामौषधानां पथ्यानां च उपकारं विदधाति— क्षणम् उपविश तावत्—

मुदिता— नपुन वैद्यस्य व्यवस्था अवहेलनीया, क्षणादागच्छामि ।

( प्रस्थिता )

प्रमोदः— हृदय ! किमिदं तरलत्वं नाम अवलम्बसे ? अयथार्थेषु पुनरभिनिवेशः सर्वथा निष्फलएव अहो ! कथं मुदितामपि प्रसन्नामुदारतमां परिहातुमीष्टे प्रमोदः— कथं वा जनन्याः स्वीकृतिमन्यथायितुं प्रभवेत्— भगवन् ! सर्वथा अशरणोऽस्मि मन्दभाग्यः ।

( प्रविशति आभीरी )

आभीरी— कथमिदं आश्चर्य्यतमं युवराज ! भवानपि अशरणः शरणं मार्गयते ।

प्रमोदः— भद्रे ! किं वा दुष्करं दैवेन ? किम्वा न सम्भाव्यते

जीवानामदृष्टेषु— अपि भद्रे !—

आभीरी— का वा विवक्षा देव !

प्रमोदः— क्षमस्व— अपीयं मुदिता अवश्यं नागरिका ? मेघासनसन्निकटमार्गे राजपुरुषानुच्छिद्य, अपाहारन्नेनां वनेचराः ?

आभीरी— ( तूष्णीं तिष्ठति )

प्रमोदः— नैवं सखि ! न किञ्चिदत्याहितं मत्तः शङ्कस्व । ममैव कस्यचिन्मनोरथस्य कृते एवं पृच्छामि । तिष्ठतु तावत्— आभि ! किमिदानीं वन्यै राजकुलस्य प्रतिपक्षत्वेन क्रियते ?

आभीरी— सर्वे वनेचराः प्राणान् तृणीकृत्य, स्वनिश्चितेषु रममाणा वर्त्तन्ते ।

प्रमोदः— राज़ा पुनः ?

आभीरी— बलानि उपरुध्य अभ्यायातो वीरभद्रः ।

प्रमोदः— ( दीर्घं निःश्वस्य ) अहो अद्यत्वे भारतीयानां शस्त्राशस्त्रि समाधानमिति परम् आश्चर्य्यकरम्— आभि ! तत्रापि उभयोः पक्षयोः सम एव सर्वानर्थकरः संरम्भः ।

आभीरी— परमयं जनन्याः पीडयिता स राजा ।

प्रमोदः— सखि ! तत्र वा तस्य राज्ञः मनुष्येष्वपि सम्भविनः पशुत्वस्य कारणत्वं स्यात्— नपुनाराज़कुलस्य ।

आभीरी— क्षन्तुमर्हसि देव ! राज्याधिपस्य धर्मः सनातन एष

प्रजानामानुकुल्यम् ।

प्रमोदः— इदानीं तादृशधर्मस्य असम्भवात् राज्यमित्येव आवश्यकं— ननु नः तस्यापि कश्चित् जन्मतः सार्वभौमः ।

आभीरी— एवमेवेदम् ।

प्रमोदः— परं हिंसावलम्बनेन किं वा लभ्यते ?

आभीरी— एतादृशेषु को वा अन्य उपायः प्रयुज्यते ?

प्रमोदः— नैवमेवम् आभीरि !— इदानीं महाभारतीयमेव राजकुलं भारतवर्षस्य शासनं परिचालयतीत्यलम् पृथिव्यां युद्धसाधनत्वेन अद्यत्वे यावन्ति शस्त्राणि आविष्कृतानि— तैरेव क्रमभूयोभिः प्रतिष्ठानासम्भवात्— उपकरणाभावप्रसङ्गाच्च राज्यमिति सर्वथा सर्वैस्त्याज्यमेव ।

आभीरी— एवं चेन्नियतं शबराणां स्वातन्त्र्यं कुतो न प्रमाणीकरोति राजकुलम् ?

प्रमोदः— कालः प्रमाणीकारयेत्—लोकः स्वीकारयेत्— जन्तुर्हि मनुष्यत्वमात्रेण स्वतः स्वतन्त्रः ।

( मुद्रिकां पुनः पुनः पश्यन्ती मुदिता )

मुदिता— ( स्वगतम् ) अयमपि राजपुत्र एव— सैवेयं मुद्रिका-

आभीरी— एवमपि—

प्रमोदः— [एवमपि नात्र हिंसाया जनक्षयस्य वा स्वल्पोऽप्यवसरः ।

मुदिता— सत्यमाभि ! यथैते यमकिङ्कराइव शस्त्रधारिणः सर्वतश्चरन्तीति कथं वा परिणमेत् ! आभि ! न कथं वार्य्यते संरम्भः ।

आभीरी— एवं मुदि ! यद्यनेन महाभाग्येन कृतां पद्धतिं जना अनुमन्यन्ते ।

मुदिता— शोभनं स्यात्— सुखं स्यात्— परन्तु— जननी यद्येवमादिशेत् ।

प्रमोदः— याहि मुदि ! याहि आभि ! जननीं मातरं सशपथम् अनुरोधयतम्— मां वा अनुमन्येतां देव्यौ ।

आभीरी— युवराज ! नायं कालः— क्षमस्व—आवामेव जननीं प्रार्थयावहे — सत्वरं युवराजमनुमान्य आगच्छ ( अञ्जलीकृत्य ) यामि महाभाग ! पुनर्दर्शनाय ।

प्रमोदः— याहि सखि ! ( सा गता )

( मुदिता वारं वारं मुद्रिकां पश्यन्ती स्थिता )

प्रमोदः— मुदिते ! किं वा तत्र मुहुः पश्यसि ?

मुदिता— ( व्रीडिता ) मुद्रिकां पश्यामि ।

प्रमोदः— ( स्वस्य रिक्तांगुलिं पश्यन् ) अये ममैवेयं मुद्रिका स्यात्— उपनय मुदि !

मुदिता— पथि लब्धवती अस्मि ।

प्रमोदः— ( सस्मितम् ) ततश्च ।

मुदिता— पथिस्थितेषु लब्धवतामधिकारः ।

प्रमोदः— ( सवैलक्ष्यम् ) मुदि !— अवश्यमिदं तवैव अधिकृतं भवतु दैवेन ।

मुदिता— किं वा दैवेन— भयानेवेदं मदधीनं कृतवान् ।

(सचमत्कारम्) केयं, केयं, साक्षात् मम मुदितायाः स्वरसंयोगः— मुदितायाः — प्रियतमायाः— किमेषा-मुदिरेव मुदिता ?

( प्रविशति आभीरी )

आभीरी— ( करुणां नमस्कृत्य ) एहि रे मुदि ! इयमत्र वर्त्तते जननी— सा पुनर्यावाकार्थं गता स्यात् ।

( प्रविशति पिच्छिला )

पिच्छिला— सर्वदा यावकं यावकमिति— इदानीं पुनर्देव्याः जलतोलनार्थं यामि ।

करुणा— पिच्छिरस्माकं सर्वकर्मसु निपुणा ।

पिच्छिला— यामि हे ! जननि ! ( गता )

मुदिता— ( प्रविशन्ती ) जननि ! वन्दे ( इति नमस्कृत्य आगच्छति ) ( करुणामुदिते सावेगं सानन्दं द्रुतं परस्पर-मभिमुख्यौ भवत्यौ )

करुणा— मुदिते— मुदिते— आयुष्मति !

मुदिता— आर्य्ये ! आर्य्ये ! अत्तिके—

( तत् पादयोः पतन्तीं सा दृढमालिङ्गति )

आभीरी— ( करुणायाश्चरणयोर्नतजानुः ) जननि ! क्षमस्व इतः पूर्वमेव मुदिं जनन्या न समयोजयम् ।

करुणा— ( तामुत्थापयन्ती ) आभि ! प्रियसखि !— मुदि !

मुदिता— ( अश्रूणि पातयन्ती ) आर्य्ये !

आभीरी— पुनः शपितासि मुदि ! मा रोदिहि ।

करुणा—( मुदिताम् ) भगिनि ! अपहरणमपि ते आभीर्य्याः संयोगेन धन्यं जातम् ।

नेपथ्ये— समाक्रान्ता पल्ली— सावधाना भवत ।

करुणा— वीरभद्र आक्रान्तवान्— न यूयमितो बहिर्भवत । यामि तावत्— मुदि ! अत्रैव तिष्ठ । ( गता )

आभीरी—प्रियसखि ! क्षमस्व वनजातां पशुप्रायामाभीरीम् ।

मुदिता—( तामालिंग्य ) कस्यापराधस्य क्षमां याचसे आभि ! न पुनर्मुदिस्तव अधमर्णतां चिरं गमिता ? प्रसीद सखि !

आभीरी— अहो ! महानुभवता— सखि ! शरणं गतास्मि ।

( तास्याः पादौ संगृह्णाति )

मुदिता—( तामुत्थाप्य आलिंग्य ) शपितासि आभि ! मुदितया यद्येवं पुनः—

आभीरी— परं सखि ! जनन्याः सन्निधौ आवयोः प्रार्थनात् पूर्वमेव समारब्धं युद्धम् ।

मुदिता— एवमपि आभि ! आगच्छ—युष्माकं जननीमेव यामः

आभीरी— अत्रागच्छेत् जननी ।

मुदिता— परमसह्यो विलम्बः ।

( प्रविशति करुणा )

करुणा— कस्मिन् विलम्बं न सहसे दि ?

मुदिता— तवैव दर्शनार्थमार्य्ये !— एवं—

करुणा— किं पुनरेवम् ?



मुदिता— आभीरी किमपि वक्तुमिच्छति ।

प्रमोदः— एहि मुदि — हस्तमुपनय— पश्यामः कीदृशं शोभते मुद्रिका तव हस्तसंगमनेन ।

मुदिता— ओं — परिहासः— हस्तस्य शोभावद्धनार्थं धार्य्यते मुद्रिका— न स्वयंशोभितानिमित्तम् गृह्णातु भवान् मुद्रिकाम् ( तदन्तिकमुपगत्य मुद्रिकामवतारयितु मुद्युक्ता )

प्रमोदः— ( तस्या हस्तं गृहीत्वा ) मुदि ! मा अवतारय इमां सुष्ठु शोभते तव करपद्मगता मुद्रिका ( करपल्लवस्य पश्चात् सुचिरं निर्वर्ण्य ) अहो— कथं वा कोकनद गर्भ-सुकुमारस्य करपल्लवगर्भस्य सुषमा स्यात्— ( वाम-करपल्लवम् अस्या उत्तानीकृत्य पश्यन् सानन्दं— साश्चर्य्यं सोद्वेगम् ) मुदि ! मुदि ! सैव त्वं मुदिता— सैव त्वं मुद्रिकायन्त्रधारिणी— सैव त्वं पथि वन्यैरपहृता सैव त्वं प्रमोदस्य मातृदत्तः पुरस्कारः— चिराभीष्टतमा हृदयदेवता— एहि मुदि ! आमन्दमयि !

( सानन्दां सचमत्कारां सलज्जां तामङ्के करोति

पटक्षेपः

—:○:—

तृतीयाङ्के पंचमदृश्यम् ।

( प्रविशति करुणा )

करुणा— ( परिक्रम्य ) कान्त ! नाद्यापि प्रसीदति करुणायाः सौभाग्यम्—अत्यन्तं सन्निहितापीयं तव दर्शनं नाद्यापि प्राप्तवती--परमहमेव मन्दभाग्या दयितस्य मम सर्वथा दुःखकारणं भवामि— हृदयेश्वर ! क्षम्यतां दासी क्षम्यतां मन्दभाग्या— कामं सीदतु गोरक्षनाथः— कामं जयन्तु शवराः— कामं मानवानामेव स्वतन्त्रतायां पृथिव्यां सर्वे मानवा अभिनन्दन्तु— कामं च प्रियजननायकस्य तव नाम सुचिरमितिहासमुज्ज्वलीकरोतु— कान्त ! कान्त ! बहुशो निवेदितवती करुणा— न पुनः कान्तः तदाहत्य दुर्गाधिपतेरनुचरत्वं समासादितवान् क्व वा लीनः स्यात् प्रमोदः । नपुनः केनचित् सुरक्षितः शवरपल्ल्याम्— एवं वा स्यात् आर्य्य ! प्रमोद ! नियतं तव शुभं भूयात्— पितुः कल्मषदलनक्षमो भवान्— प्रथमं सौजन्यं शिक्षतां स राजा— राज्यस्य पिता प्रभुश्च— धिक् धिक् एवं [illegible]
त्वं वा—

(नेपथ्ये) मुदित— [illegible] ! [illegible] !